

चन्दमामा

सम्पुटः - २२ नवम्बर् - २००६ सञ्चिका - ११



# एतस्य अङ्कस्य विशेषाः













# अन्तरङ्गम्



**ग्राहकशुल्कम् -**

अमेरिका-केनडादेशयोः कृते

प्रतिकृतिमूल्यम् - $२

वार्षिक शुल्कं - $२०

भवदीयं धनं 'Chandamama India Limited' नाम्ना प्रेष्यताम् -

**Subscription Division**

**CHANDAMAMA INDIA LIMITED**

No. 82, Defence Officers Colony,

Ekkatuthangal, **CHENNAI - 600 097**

E.mail : subscription@chandamama.org

**ग्राहकशुल्कविवरणम्**

वायुयानेन भारतेतरदेशान् प्रति

वार्षिकं (१२ सञ्चिकाः) - रू.९००/-

भारते रू. १५०/- (बुक्पोस्ट् द्वारा)

भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा

'Chandamama India Limited' नाम्ना प्रेषणीयम् ।



*संस्थापकौ –*
**चक्रपाणिः, बि. नागिरेड्डिः च**

# जीवनस्य सुरक्षां प्रति

सप्टम्बर-अक्टोबर-नवेम्बरमासाः भारते प्राधान्यम् आवहन्ति बालानां दृष्ट्या । सप्टम्बरमासस्य पञ्चमे दिनाङ्के डा॰ सर्वेपल्लिराधाकृष्णन्महोदयस्य जन्मदिनस्य आचरणं क्रियते । सः आधुनिकभारतस्य महोपाध्यायः । यः बालेभ्यः संस्कारं ददाति सः एव शिक्षकः इति उच्यते । अतः अस्माकं उपनिषत्सु 'आचार्यदेवो भव' इति उक्तम् अस्ति । 'आचार्यः दैवसमानः' इति तस्य तात्पर्यम् ।

अक्टोबरमासस्य द्वितीये दिनाङ्के गान्धिजयन्ती आचर्यते । तस्मिन् दिने भारतीयाः गान्धिवर्यस्य जीवनगाथां स्मरन्ति । तदीयम् अत्यन्तस्नेहमयं जीवनं केन वा न स्मर्येत ? भारतदेशं विदेशीयानां शासनात् स्वतन्त्रं कर्तुं सः भोगजीवनं परित्यज्य सरलतमं जीवनं कृतवान् । भारतस्य स्वातन्त्र्यसम्पादने प्रमुखं पात्रम् ऊढवन्तं तं 'राष्ट्रपिता' इति बिरुदेन निर्दिशति देशः । भारतीयाः स्वाभिमानयुक्तं जीवनं यथा कुर्युः तत् कर्तुं तेन विशेषप्रयासः कृतः ।

स्वतन्त्रभारतस्य प्रथमप्रधानमन्त्रिणा जवाहरलालनेहरुवर्येण भारतस्य बालानां च स्वास्थ्यसम्पद्विषये विशेषावधानं विहितम् । बालानां कृते विशेषस्थानम् आसीत् तस्य हृदये । अतः एव बालाः तं प्रीत्या 'चाचा' इति निर्दिशन्ति स्म । देशस्य एकैकस्मिन् अपि बाले सः भाविपौरत्वं पश्यति स्म । नवेम्बरमासस्य चतुर्दशे दिनाङ्के तस्य जन्मदिनोत्सवम् आचरति देशः ।

*चन्दमामा* आशास्ते यत् बालाः सर्वे भारतस्य प्रगतौ सहभागिनः भूत्वा शान्तिवर्धनाय प्रयत्नं कुर्युः, तेन आगामिनी सन्ततिः सुरक्षायुक्तं जीवनं कुर्यात् इति ।

*सम्पादकः* – विश्रम्

Visit us at : http://www.chandamama.org



# वाचकानां पुटोऽयम्

## ओम् उपाध्यायः, भोपालतः

आ षष्टेः वर्षेभ्यः अहं चन्दमामायाः वाचकः अस्मि । बाल्ये तु पुनः पुनः पठनेन कतिचन कथाः मया कण्ठस्थीकृताः भवन्ति स्म अपि । अविस्मरणीयाः वर्णरञ्जितैः चित्रैः युताः च ताः कथाः मां कल्पनाप्रपञ्चं नयन्ति स्म । कथानां पात्राणि वास्तविकजीवनस्य नायकान् अपि मन्ये अहम् ।

साम्प्रतम् अहं लेखकत्वेन यत् कार्यं करोमि तत्र चन्दमामायाः प्रेरणा महती । अद्यतन-जीवनवृत्तौ अपि अस्याः प्रधानं पात्रम् अस्ति परोक्षतया । किन्तु बाल्ये यथा एतां पठामि स्म तथा इदानीं पठनं न प्रचलति मम इत्यतः क्षन्तव्यः अहम् । अत्र प्रकाश्यमानाः काल्पनिककथाः, आगामिनि काले अपि विराजन्ताम् इति आशासे । चन्दमामाविकासे मुख्यपात्रं वहतः सम्पादकस्य, तदितरेषां च कृते मदीयाः शुभकामनाः ।

## पी.बी. मोहनः, चेन्नैतः

पञ्चत्रिंशतः वर्षेभ्यः आरभ्य चन्दमामायाः अभिमानी अस्मि अहम् । पुरातनसञ्चिकानां सङ्ग्रहः करणीयः इति इच्छा अस्ति मम । कुत्रचित् पठितं यत् गतसञ्चिकानां सान्द्रमुद्रिकाः (डिजिटलैसड्) सज्जीक्रियमाणाः सन्ति इति । सान्द्रमुद्रिकायां मुद्रिताः कथाः क्रेतुम् इच्छामि अहम् ।

*सान्द्रमुद्रिकासज्जीकरणं प्रचलत् अस्ति । त्रिचतुरमासाभ्यन्तरे ताः सान्द्रमुद्रिकाः विक्रयणार्थं सिद्धाः भवेयुः ।* **- सम्पादकः**

## प्रधानाध्यापिका कापरे छाया, कर्णाटकतः

चन्दमामा अविलम्बेन एव षष्टितमं वार्षिकोत्सवम् आचरिष्यति इति ज्ञातवत्याः मम मनः हर्षयुक्तं जातम् । युवजनतायाः सर्वाङ्गीणप्रगतये विशेषकार्यं कुर्वत्यै चन्दमामायै समर्प्यन्ते मया अभिनन्दनानि । एतत् कार्यं शीघ्रमेव इन्फोसिस्संस्थया अपि अभिज्ञातं भवेत् ।

## पटनानगरीयया खुशबूवर्यया प्रेषितम् ई-पत्रम् -

षष्टितमस्य वर्षस्य निमित्तं चन्दमामायै मम अभिनन्दनानि । आसक्तिवर्धककथाप्रकाशनम् अनुवर्तताम् ।



# दायित्वज्ञानम्

प्रसादः बाल्यात् आरभ्य एव शीघ्रकोपी । लघु तर्जनं कृतं चेदपि सः नितरां कुपितः भवति स्म । अतः कोऽपि तस्य व्यवहारे दोषदर्शनसाहसं न करोति स्म । किन्तु भगवति तस्य महती भक्तिः आसीत् । सः प्रतिदिनं मन्दिरं गत्वा भगवत्कथाः शृणोति स्म । सः समवयस्कैः सह अत्यन्तं न्यूनं भाषते स्म । ग्रामे पुराणश्रावणं यदा भवति तदा सावधानं श्रुत्वा लब्धे समये गीतापारायणम् अपि करोति स्म सः । अन्यविद्याः अपि सम्यक् एव अधीत्य अष्टादशे वयसि सः विद्याभ्यासं समापितवान् ।

यदा सः बालः आसीत् तदा तस्य दैवभक्तिं सर्वे प्रशंसन्ति स्म एव । किन्तु ज्येष्ठत्वं यथा यथा प्राप्तं तथा तथा तस्य दैवभक्तिः मूढभक्तिः इव परिवृत्ता अभवत् । अतः ज्येष्ठाः अपि तस्मात् दूरे एव भवन्ति स्म । प्रातःकाले एव सः पूजायां मग्नः भवति स्म ।

तस्य पितामहः पितामही च वार्धक्यम् आप्तवन्तौ आस्ताम् । मातापितरौ अपि किमपि कार्यं कर्तुं शक्तौ न आस्ताम् । तस्य अग्रजः आदित्यः तस्मादपि वर्षद्वयेन ज्येष्ठः आसीत् । सः एकाकी एव गृहस्य क्षेत्रस्य च कार्याणि निर्वहति स्म ।

कार्यं कर्तुम् उक्तं चेत् प्रसादः शीघ्रकोपं दर्शयति स्म । तस्य सर्वा अपि एकाग्रता दैवभक्तौ एव आसीत् ।

एतेन खिन्नः तस्य पिता आदिनं तम् एव विषयं प्रधानीकृत्य प्रलपति स्म । तदा आदित्यः वदति स्म - ''किमर्थं विषयेऽस्मिन् चर्चा ? कार्याणि कर्तुम् अहम् अस्मि खलु ? प्रसादे कोपः अधिकः । अप्रियं कथनं सर्वथा न सहते सः । अतः तं किमपि मा वदन्तु भवन्तः । गृहस्य सर्वाणि अपि कार्याणि अहं निर्वक्ष्यामि'' इति ।

तदनन्तरं छायया सह आदित्यस्य विवाहः



सम्पन्नः । श्वशुरगृहम् आगतायाः छायायाः व्यवहारः कञ्चित् कालं प्रसादाय अरोचत । किन्तु दायित्वरहितं देवरं यदा सा कतिपय-कार्याणि अवदत् तदा सः तया सह कलहाय सिद्धः अभवत् । अग्रजस्य आदित्यस्य पुरतः सः प्रजावत्याः व्यवहारविषये आक्षेपवचनानि उक्तवान् । किन्तु आदित्यः तं समाश्वासयन् – ''छाया आदिनं गृहकार्येषु व्यस्ता भवति । तस्याः वचनेषु अवधानम् अदत्त्वा स्वकीये दैवकार्ये मग्नः भवतु भवान्'' इति उक्तवान् ।

एतेन प्रसादस्य मनसि भावना आगता यत् मम कथनं गभीरम् इति न परिगण्यते अग्रजेन इति । सः एतम् एव विषयं यदा ज्येष्ठानां सकाशे उपस्थापितवान् तदा तेऽपि प्रजावत्या कार्यव्यग्रया किमपि उच्यते चेदपि अन्यथा न ग्रहीतव्यम् इत्येव अवदन् । प्रसादः तेषां पुरतः स्पष्टम् अवदत् – ''सा मम विषये हस्तक्षेपं न कुर्यादिति सूच्यताम्'' इति ।

एतत् सर्वं ज्ञातवती छाया तम् उक्तवती – ''यावत् शरीरे सामर्थ्यम् आसीत् तावत् भवतः पितामहः पितामही च परिश्रमं कृतवन्तौ । स्वेदवाहनपूर्वकं तैः यत् सम्पादितं तस्य रक्षणम् अभिवर्धनं च प्राथमिकं कर्तव्यम् । भवतः अग्रजः पूर्वजैः आसादितस्य सम्पद्राशेः संरक्षणे सपरिश्रमं मग्नः अस्ति । तत् उच्यते पौरुषम् इति । किमपि कार्यम् अकृत्वा व्यर्थ-तया समययापनं न पौरुषम्'' इति ।

''अहं व्यर्थं समयं कुत्र यापयामि ? दैवभक्तौ तथा निरतः अस्मि यथा प्रह्लादः । हिरण्यकशिपुः इव भवती मां न पीडयतु । भगवान् भवतीं दण्डयिष्यति'' इति प्रजावतीम् उक्तवान् प्रसादः ।

''अहं मम पत्युः, श्वशुरयोः, तन्माता-पित्रोः च सेवां कुर्वती अस्मि । यद्यपि भवतः लेशमात्रेण अपि प्रयोजनं नास्ति, तथापि भोजनेन भवन्तं पोषयन्ती अस्मि । अतः भगवान् मम प्रशंसाम् एव करिष्यति, न तु दण्डनम् । वस्तुतः अपि भवान् भगवद्भक्तौ प्रह्लादसदृशः यदि स्यात् तर्हि मह्यं दण्डनं ददातु इति देवं प्रार्थयताम् । एवं कर्तुं न शक्तं चेत् अग्रजेन सह गृहदायित्वानि वहेत्'' इति उक्तवती छाया । तस्याः वादः प्रसादेन अपि अङ्गीकृतः ।

प्रतिदिनं मन्दिरं गत्वा 'मम प्रजावत्या दण्डनं प्राप्तं भवतु' इति प्रसादः प्रार्थनम् आरब्धवान् । कदाचित् एषः विषयः पितामह्या ज्ञातः अभवत् । सा तं निन्दन्ती – ''प्रजावती

तु मातृतुल्या भवति । तादृश्या दण्डनं प्राप्येत इति भगवन्तं प्रार्थयमानस्य भवतः मूर्खतां धिक्'' इति उक्तवती ।

''सा महापापिनी मम दैवकार्येषु विघ्नम् उत्पादयति प्रतिदिनम् । प्रह्लादः एव मम आदर्शः । तेन पापयुक्तस्य पितुः दण्डनं यथा भवेत् तथा कृतम् । अतः अहम् अपि तावत् देवं प्रार्थये, यावत् महादण्डनं न प्राप्येत प्रजावत्या'' इति अवदत् प्रसादः ।

पितामहः पितामही आदित्यः च प्रसादस्य एतैः कटुवचनैः खिन्नतां प्राप्य अवदन् - ''गत्वा प्रजावतीं क्षमां प्रार्थयतु, अन्यथा गृहं परित्यज्य बहिर्गच्छतु अस्मिन् एव क्षणे'' इति ।

''पूर्वं पिता एकः एव प्रह्लादस्य शत्रुः आसीत् । किन्तु एतस्मिन् गृहे सर्वेऽपि मम शत्रवः एव । भवतां कथनानुसारम् अहम् इदानीम् एव गृहं त्यक्त्वा गच्छामि । किन्तु यावत् भवन्तः प्रत्यागमनाय निवेदनं न करिष्यन्ति तावत् पादक्षेपः अपि अत्र न भविष्यति मम'' इति वदन् प्रसादः गृहात् बहिः गत्वा ग्रामान्ते स्थितस्य मन्दिरस्य प्राङ्गणे उपाविशत् ।

प्रसादः रूक्षं व्यवहृत्य आगतवान् इति ज्ञात्वा मन्दिरस्य अर्चकः रामशास्त्री तम् अवगमयन् अवदत् - ''भवता महान् अपराधः कृतः । मातापितरौ दैवसमानौ इति किं भवता न ज्ञातम् ? तयोः कोपनं दैवस्य कोपनम् इव । अतः गृहं प्रतिगत्य क्षमायाचनां करोतु भवान्'' इति ।

''अहम् इदानीम् एव प्रतिगच्छामि चेत्



भगवति विश्वासः न भवति कस्यापि । कठिनेन दण्डनेन भगवता मम प्रजावती यदि दण्ड्येत तर्हि तस्मिन् सर्वेषां विश्वासः दृढः भवेत् । अतः यावत् मम इष्टं सिद्धं न भविष्यति तावत् अहं निरन्तरं नामस्मरणं कुर्वन् अत्र स्थास्यामि । तुलसीतीर्थमात्रं पिबन् अत्र एव भविष्यामि'' इति उक्तं प्रसादेन ।

एतत् श्रुत्वा रामशास्त्री तूष्णीकः अभवत् । दिनत्रयं यावत् प्रसादेन किमपि न भुक्तं, न वा पीतम् । तुलसीतीर्थमात्रं सेवमानः सः भगवतः ध्याने मग्नः आसीत् । अतः सः बलहीनः जातः ।

तृतीये दिने सायं ध्यानमग्नः सः स्वप्ने बालप्रह्लादम् अपश्यत् । सः प्रह्लादम् अवदत् - ''मम दुःस्थितिं पश्यतु । भवतः तु पिता एकः एव शत्रुः आसीत् । किन्तु मम

गृहसदस्येषु सर्वे अपि दैवकार्ये विघ्नम् उत्पादयन्तः सन्ति । भवान् एव मम आदर्शः । मम प्रजावत्याः दण्डने भवता अपि साहाय्यं करणीयम्'' इति ।

तदा प्रह्लादः हसन् उक्तवान् - ''मम पिता मां कदापि न द्विषति स्म । द्विषति स्म सः स्वस्य शत्रुं विष्णुम् । मम कृते तेन बहुविधानि कष्टानि दत्तानि यत् तस्य कारणं - शत्रुद्वेषः एव । यतः अहं तस्य शत्रुं शरणं गतः । मनुष्यजन्मनः कतिपयानि कर्तव्यानि भवन्ति, यानि अवश्यं निर्वोढव्यानि एव । तत् उपेक्ष्य ज्येष्ठानां कृते कष्टदानं, तेषां द्वेषकरणं च अनुचितमेव । यया भवतः कर्तव्यबोधनं कृत्वा मार्गदर्शनं कृतं तस्यै प्रजावत्यै दण्डनं दातव्यम् इति चिन्तयन् अस्ति भवान् । एतत् धर्म्यं न । मां भवान् आदर्शं मन्यते इति अङ्गीकरोमि । किन्तु भवान् स्वभक्त्या तान् सर्वान् क्लेशयन् अस्ति यत् तत् तु सर्वथा अनुचितम् । भक्त्या प्रीतिः उद्भवेत्, न तु द्वेषः । मूढभक्तिः, मूढाचरणं च कष्टाय एव । मम कथनं गभीरतया परिगणयतु । भवति परिवर्तनं भविष्यति । गृहसदस्याः आगत्य भवन्तं गृहं प्रति नेष्यन्ति'' इति अवदत् प्रह्लादः मधुरस्वरेण ।

''मूढभक्त्या कष्टम् एव भवति इति, अहङ्कारेण ज्येष्ठानां निरादरः अनुचितः इति च अद्य मया ज्ञातम् । मम ज्ञानोदयः कृतः भवता । कृतज्ञोऽहम्'' इति अञ्जलिबद्धः सन् अवदत् प्रसादः ।

तावता अर्चकः तस्य मुखे जलसेचनं कृत्वा अवदत् - ''भवन्तम् अन्विष्यन्तः केऽपि आगतवन्तः सन्ति, पश्यतु भोः'' इति ।

प्रसादः आश्चर्यं प्राप्नुवन् उत्थितवान् । तेन न ज्ञातं यत् मया यत् दृष्टं तत् स्वप्नस्थम् उत वास्तविकम् इति । पुरतः अग्रजः, प्रजावती च स्थितौ आस्ताम् । ताभ्याम् उक्तं मधुरेण स्वरेण - ''विना भोजनं भवान् कति दिनानि तिष्ठेत् ? चलतु गृहदिशि'' इति ।

''प्रजावति ! क्षाम्यतु माम् । दैवभक्तेः वास्तविकम् अर्थम् अद्य अहं मम आदर्शपुरुषस्य प्रह्लादस्य मुखात् ज्ञातवान्'' इति वदन् प्रसादः प्रजावत्याः पादयोः न्यपतत् ।

तस्मिन् सञ्जातेन परिवर्तनेन सर्वे सन्तुष्टाः अभवन् ।





# वत्से धेन्वाः प्रीतिः

राघवस्य गृहस्य पार्श्वे एव नारायणस्य गृहम् अपि । तयोः कृषिक्षेत्रम् अपि एकत्र एव आसीत् । तयोः गृहयोः मध्ये प्राकारादिकं न आसीत् । यथा राघवस्य गृहे तथैव नारायणस्य गृहे अपि वृषभद्वयं महिषीद्वयं च आसीत् । किन्तु धेनुः उभयोः अपि गृहे न आसीत् ।

पत्न्याः इच्छा पूरणीया इति धिया तौ कदाचित् गोविक्रयस्थानं गत्वा एकैकां धेनुं क्रीत्वा आगतवन्तौ । एतस्मात् कान्ता शान्ता च नितरां प्रसन्ने जाते । यतः गोपूजायै अवसरः प्राप्तः अभवत् ताभ्याम् ।

नारायणस्य धेनुः वर्षद्वये वत्सद्वयं प्रसुतवती । किन्तु राघवस्य धेनुः तु द्विवारम् अपि वत्साम् एव प्रसूतवती ।

पुनः ते उभेऽपि धेनू यदा गर्भवत्यौ अभवतां तदा राघवः आशां कृतवान् यत् एतदवसरे वत्सः एव जनिष्यते इति ।

यदा धेन्वाः प्रसूतिदिनं सम्प्राप्तं तस्मिन् एव दिने बन्धूनां गृहे भविष्यमाणे विवाहसमारम्भे उपस्थातुं ग्रामान्तरं प्रति गन्तव्यम् अभवत् नारायणेन । सः गमनात् पूर्वं धेनोः संरक्षणदायित्वं राघवाय समर्पितवान् ।

तदा राघवः अचिन्तयत् यत् नारायणस्य धेनुः वत्सं प्रसूते चेत्, मम धेनुः च वत्सां प्रसूते चेत् च तस्य धेनोः समीपे वत्सां स्थापयित्वा अहं वत्सम् आनेष्यामि इति । एतां योजनां सः पत्नीं सोत्साहम् अवदत् ।

एतत् श्रुत्वा कान्ता आश्चर्येण स्तब्धा अभवत् । सा पतिं निन्दन्ती - ''कीदृशं चिन्तनम् एतत् भवतः ? सर्वथा अनुचितम् अस्ति एतत् चिन्तनम् । मानवाः स्वस्य अपत्यं यथा सम्यक् अभिजानीयुः ततोऽपि उत्तमतया स्वकीयम् अपत्यम् अभिजानन्ति पशवः । भवता शुनकमार्जालवानरादयः अवलोकिताः स्युः एव । महता प्रेम्णा ते स्वसन्तानस्य संरक्षणं कुर्वन्ति । अतः अस्माकम् अपेक्षानुगुणं धेनु-

वत्सपरिवर्तनं कुर्मः चेत् धेनुः रज्जुं त्रोटयित्वा वा स्ववत्सं प्राप्नुयात् एव'' इति अवदत् ।

राघवः पत्नीवचने उपेक्षाभावं दर्शितवान् । तस्य चिन्तनस्य अनुसारम् एव धेनू वत्सं वत्सां च प्रसूतवत्यौ । नारायणस्य धेनोः वत्सः, राघवस्य च धेनोः वत्सा अजायेताम् । कान्ता पतिं बहुधा वारितवती चेदपि वत्सयोः स्थान-परिवर्तनं कृतम् एव राघवेण । 'मम योजना मया उपायेन साधिता एव' इति चिन्तयन् सः आनन्देन सुप्तवान् ।

शयनानन्तरं गोष्ठे कोलाहलः अभवत् । तेन जागरितौ कान्ता, राघवः च तत्र गत्वा दृष्टवन्तौ । नारायणस्य धेनुः तत्र वत्सं लिहन्ती प्रेम्णा अभिषिञ्चन्ती ताभ्यां दृष्टा । ततः तौ नारायणस्य गोष्ठं गतौ । तत्रापि तादृशम् एव दृश्यम् आसीत् ।

तदा राघवेण अवगतं यत् पशवः स्वस्य अपत्ये कियत् स्निह्यन्ति इति । पत्न्याः वचने सत्यांशः निहितः अस्ति इत्यपि तेन ज्ञातम् । स्वेन कृतस्य निन्द्यकर्मणः विषये पश्चात्तापः अनुभूतः तेन । नारायणस्य धेनुं वत्सं च तदीयगोष्ठं प्रापय्य स्वधेनुं, वत्सां च स्वगोष्ठम् आनीतवान् सः ।

अनन्तरदिने नारायणः तस्य पत्नी च बन्धुगृहतः प्रत्यागतवन्तौ । ताभ्यां राघवाय तत्पत्न्यै च धन्यवादः समर्पितः कृताय साहाय्याय ।

तदा रात्रौ प्रवृत्तां घटनाम् अधिकृत्य पश्चात्तापम् अनुभवन् राघवः नारायणम् उक्तवान् – ''मयि दुर्बुद्धिः जागरिता आसीत् । अतः भवतः क्षमां याचे'' इति ।

''किम् एतत् कथ्यते भवता ? अत्र दुर्बुद्धेः का प्रसक्तिः ? त्रिभिः वत्सैः अहम् अपि किं करवाणि ? तेषु कश्चित् स्वीकरोतु भवान्'' इति अवदत् नारायणः ।

''नारायण ! भवतः सौहार्दभावः श्लाघ्यः एव । मम वत्सासु काचित् भवता यदि स्वीक्रियेत तर्हि अहं भवतः वत्सं निस्सङ्कोचं स्वीकुर्याम्'' इति उक्तवान् राघवः । नारायणः एतत् अङ्गीकृतवान् ।

दूरे स्थित्वा एतत् सम्भाषणं श्रुतवतीभ्यां शान्ताकान्ताभ्यां हासपुरस्सरं परस्परं मुखं दृष्टं सन्तोषेण ।





# भयङ्करः खातः

## १३

*[केशवः जयमल्लः वृद्धः च यस्मिन् दिने गुहातः प्रस्थितवन्तः, तस्मिन् एव दिने ब्रह्मदण्डी मान्त्रिकः अङ्गरक्षकाभ्यां सह विन्ध्याचलदिशि गमनम् आरब्धवान् । अन्धकारे सन्निहिते केशवादयः कञ्चन ग्रामं प्राप्नुवन् । तत्र तैः ज्ञातं यत् ब्रह्मदण्डी अपि तमेव ग्रामम् आगच्छन् अस्ति इति । ते त्रयः अपि ततः धावितवन्तः । तदनन्तरम् ..... ]*

केशवस्य पित्रा वृद्धेन मार्गदर्शनं कृतम् - ''इतः परं क्षणम् अपि अत्र न स्थातव्यम् अस्माभिः । यद्यपि अनेन वेषेण अस्मान् न अभिजानीयात् ब्रह्मदण्डी, तथापि तस्य सम्मुखीकरणं तु अवश्यं निवारणीयम् । अनपेक्षितः अपायः न उपतिष्ठेत् । दौर्भाग्येण ब्रह्मदण्डिनः आगमनमपि अत्रैव सम्भाव्यते । भवतु, चिन्ता मास्तु । वयम् एव मार्गान्तरम् आश्रयामहे । यावच्छीघ्रम् एतस्मात् ग्रामात् निर्गत्य मार्गान्तरेण सूर्योदयात् पूर्वम् एव भयङ्करः खातः प्राप्तव्यः अस्माभिः'' इति ।

ततः ते त्रयः अपि त्वरितम् एव ग्रामं क्रान्त्वा अरण्यं प्रविष्टवन्तः । तावता घनान्धकारः आवृतः आसीत् । मार्गः अपि स्पष्टतया न दृश्यते स्म । लताः गुल्मान् च वारयन्तः ते अग्रे गतवन्तः । अरण्ये पक्षिणां कलरवः, जन्तूनां गर्जनचीत्कारादिकं च श्रूयते स्म । लघुपशवः गुल्मात् गुल्मं प्रति धावन्ति स्म ।



अन्धकारे महान्तः वृक्षाः दैत्याः इव स्थित्वा भीतिम् उत्पादयन्ति स्म । त्रयः अपि हताशाः सन्तः वृक्षस्य मूले उपविष्टवन्तः ।

''एतादृशवेषधारिणः अस्मान् अभिज्ञातुं किं शक्नुयात् सः ब्रह्मदण्डी ?'' इति पृष्टवान् केशवः जयमल्लम् ।

जयमल्लः शिरश्चालनपूर्वकम् उक्तवान् - ''न इति वक्तुं न शक्यते । किन्तु अस्माभिः कश्चन दोषः कृतः । गुरुणा मौनानन्देन, यथा सर्वे श‍ृणुयुः तथा सम्भाषणं कृतं ग्रामे । यदि एषः दोषः न कृतः स्यात् तर्हि प्रायः वरम् अभविष्यत्'' इति।

''तत्र कः दोषः ? पूर्वम् एव मया उक्तम् आसीत् - यात्रावसरे शिष्याभ्यां सह एव अहं वार्तालापं करिष्यामि इति'' इति स्पष्टीकृतं वृद्धेन ।

तदा जयमल्लः उक्तवान् - ''आम् । परन्तु भवतः सम्भाषणशैली यदि केनापि दृश्येत तर्हि अपायः तु निश्चितः । ब्रह्मपुरस्य सीमायाः अतिक्रमणपर्यन्तं सावधानतया भवितव्यम् अस्माभिः। अजाकृपाणौ इव वयं ब्रह्मदण्डी च युगपत् एकत्रैव प्रस्थितवन्तः स्मः । राजगुरोः योजना अवगता खलु ? तस्य पादे सञ्जातस्य व्रणस्य औषधस्य अन्वेषणाय सः विन्ध्याचलदिशि गच्छन् अस्ति इति श्रूयते । एतत् सत्यं न स्यात् एव । ब्रह्मदण्डी वैद्यः तु न । औषधस्य आनयनाय कश्चन वैद्यः प्रेषणीयः आसीत् । भयङ्करखाते धनम् अस्ति इति राजगुरुः ब्रह्मदण्डिद्वारा ज्ञातवान् स्यात् । अतः एव तत्र लभ्यमानं निधिम् आनेतुं तं ससैन्यं प्रेषितवान् स्यात् राजगुरुः । अस्माकं शत्रुः चातुर्ये अस्मान् अपि अतिशेते'' इति ।

''आम्, सत्यम्'' इति उक्त्वा, ततः अनुक्षणमेव उत्थाय - ''अत्रैव कुत्रचित् निकटे हेषाध्वनिः श्रुतः इव'' इति अवदत् वृद्धः ।

तावता स च ध्वनिः स्पष्टं श्रूयमाणः अभवत् । त्रयः अपि आश्चर्येण परस्परं मुखं दृष्टवन्तः । अकस्मात् वृद्धस्य नेत्रे भासमाने अभवताम् ।

''इदानीम् एकं कार्यं कृतं चेत् अस्माकं समस्या परिहृता भवेत् । ब्रह्मदण्डी अनुचरैः सह अस्याम् एव दिशि आगच्छन् अस्ति इति प्रतीयते । अस्माकं कष्टं दूरीकृत्य एतस्मात् राज्यात् बहिः गन्तव्यम् अस्ति चेत् तेषाम् एव अश्वं गृहीत्वा धावनीयम् अस्माभिः'' इति उक्तवान् वृद्धः ।

तदा केशवः पृष्टवान् - ''एतत् सर्वं तावत्

सुलभम् अस्ति किं तात ?'' इति ।

''एतादृशं सम्बोधनं त्यज्यताम् । न स्मरति किं - भवतोः गुरुः अस्मि अहम् इति ? भवान् कनिष्ठः, जयमल्लः च ज्येष्ठः अस्ति । निर्जनप्रदेशे अपि अस्माकं परस्परं सम्बोधनम् एवमेव भवेत् । अचिरात् एव अहं ब्रह्मदण्डिनः अश्वम् आनेष्यामि । भवद्भ्यां तस्य अनुचरयोः अश्वौ आनेतव्यौ । एतावत् साधितं चेत् प्रातःकालाभ्यन्तरे एव ब्रह्मपुरस्य सीमाम् अतिक्रम्य अग्रे गन्तुं शक्नुयाम वयम् । तदनन्तरं भयस्य कापि प्रसक्तिः एव न भविष्यति'' इति अवदत् वृद्धः ।

तस्य वचनं श्रुत्वा जयमल्लः हसन् उक्तवान् - ''भवान् किं कर्तुम् उद्युक्तः अस्ति ? ब्रह्मदण्डिनः अश्वः कथम् आनीयेत भवता ? तस्य खड्गप्रखरतां सम्मुखीकर्तुं किं शक्नुयात् भवान् ?'' इति ।

''एतस्मिन् घनान्धकारे तस्य सम्मुखे उपस्थाय युद्धकरणं बुद्धिहीनं कार्यम् । अस्माकं कलहकोलाहलं श्रुत्वा जनाः धावन्तः अत्र आगच्छन्ति चेत् वयं गृहीताः भवेम । अतः विना शब्दं तान् अश्वच्युतान् कृत्वा कार्यं साधनीयम् अस्माभिः । वृक्षस्य उपरिष्टात् रज्जुम् आलम्ब्य अहम् अश्वात् ब्रह्मदण्डिनं पातयित्वा तदीयम् अश्वं वशीकरोमि'' इति अवदत् वृद्धः ।

''एतादृशे साहसे एतस्मिन् अपि वयसि भवतः तावान् उत्साहः यदि स्यात् तर्हि आवयोः तत् कथं न स्यात् ? एवं ननु केशव ?'' इति वदन् उत्थितवान् जयमल्लः ।

''केशव इति न, भ्रातरिति सम्बोध्यताम्''



इति ईषदिव कोपेन अवदत् वृद्धः । ततः ते त्रयः अपि तस्यां दिशि प्रस्थिताः, यस्याः दिशः अश्वाः आगच्छन्तः आसन् ।

एतन्मध्ये ब्रह्मदण्डी मान्त्रिकः उभाभ्याम् अङ्गरक्षकाभ्यां सह ग्रामस्य दिशि आगच्छन् आसीत् । तस्य पुरस्तात् पृष्ठतः च अङ्गरक्षकौ अश्वम् आरुह्य आगच्छन्तौ आस्ताम् ।

अश्वप्रयाणे ब्रह्मदण्डिनः अधिकः अनुभवः न आसीत् । तथापि सः अश्वम् आरोढुं सिद्धः जातः आसीत्, यतः पद्भ्यां चलनम् अशक्यम् आसीत् । तत् वातावरणं तस्मिन् भयं जनयति स्म । ततोऽप्यधिका भीतिः तु जयमल्लात् केशवात् च । 'केशवादयः अपि भयङ्करखातस्य दिशि एव प्रस्थिताः स्युः । यदा कदापि तेषां कारणतः अपायः आपतेत्' इति चिन्तनम् आसीत् तस्य ।



सः अङ्गरक्षकौ अवदत् – ''श्वः आरभ्य रात्रिप्रयाणं सर्वथा निवारणीयम् अस्माभिः । सूर्ये उदिते प्रयाणस्य आरम्भः, तस्मिन् अस्तं गते एकत्र वासः इति अस्माकं योजना भवेत् । जयमल्लः केशवः तत्पिता च महादुष्टाः सन्ति । अन्धकारे ते अस्माकम् उपरि आक्रमणं कुर्युः । भवद्भ्यां तु ज्ञातमेव अस्ति खलु, तेषां कारणेन गुहारक्षकाणां कीदृशी दुःस्थितिः सञ्जाता आसीत् इति'' इति ।

जितवर्मा, शक्तिवर्मा च अन्धकारावृतात् अरण्यात् पूर्वम् एव भीतौ आस्ताम्, ब्रह्मदण्डिनः कथनस्य श्रवणात् तु तयोः भीतिः अधिका अभवत् ।

''ब्रह्मदण्डिवर्य ! भवतः कथनं युक्तमेव अस्ति । तथैव करवाम । कः ग्रामः प्रवेष्टव्यः अस्ति अस्माभिः इदानीम् ? अधुना यावत् सः ग्रामः किमर्थं न प्राप्तः अस्माभिः ?'' इति उक्तवन्तौ तौ अङ्गरक्षकौ अश्वं प्रेरयन्तौ, इतस्ततः दृष्टिं प्रसारयन्तौ ।

तावता ब्रह्मदण्डिनः मुखात् उच्चैः चीत्कारः निर्गतः – ''हा, हतोऽस्मि । वञ्चितोऽहम् । मम उपरि उद्ग्रन्थिः पतितः अस्ति । रक्ष्यताम्, रक्ष्यताम्'' इति ।

''लक्ष्यच्युतिः जाता खलु ! येन उद्ग्रन्थिना शिरसि पतनीयम् आसीत् सः तु पृष्ठे पतितः'' इति वचनं श्रुतं ब्रह्मदण्डिना । तस्मिन् एव समये – 'अहो, विचित्रप्राणी, विचित्रप्राणी' इति आक्रोशं कुर्वन्तौ जितवर्मा, शक्तिवर्मा च अश्वात् अधः पतितवन्तौ । केशवः जयमल्लः च क्षणाभ्यन्तरे एव तयोः अश्वौ स्वीकृतवन्तौ ।

''अयि ज्येष्ठकनिष्ठौ ! आगच्छताम्'' इति वदन् सः वृद्धः अश्वम् अग्रे धावितवान् ।

तावति काले ब्रह्मदण्डी किञ्चित् धैर्यं प्राप्तवान् आसीत् । सः स्वस्य कटौ बद्धां रज्जुम् इतस्ततः कम्पयन् – ''जितवर्मन् ! शक्तिवर्मन् ! क्व पतितौ भवन्तौ ? भवद्भ्यां कः विचित्रजन्तुः दृष्टः ? कदाचित् केशवः जयमल्लः, वृद्धः वा दृष्टः स्यात् । जयमल्लः एव तां विद्यां जानाति । गम्यताम्, ताड्यताम्'' इति उच्चैः उक्तवान् ब्रह्मदण्डी ।

एतस्य श्रवणमात्रेण जितवर्मा, शक्तिवर्मा च धैर्यं प्राप्य उत्थाय कोशतः खड्गं निष्कासितवन्तौ । तावता सः रुदन् इव अवदत् – ''आदौ भवन्तौ मां बन्धमुक्तं कृत्वा शाखातः अवतारयताम्'' इति ।

तौ तस्य निकटं गत्वा कटौ बद्धां रज्जुं

खड्गेन छित्त्वा पतन्तं तं हस्ताभ्यां गृहीत्वा अवतारितवन्तौ ।

ग्रामात् बहिः जातम् एतम् अल्पम् अपि कोलाहलं ग्रामजनाः श्रुतवन्तः आसन् । ते दण्डान् गृहीत्वा तत्र आगतवन्तः । ब्रह्म-दण्डिनः तदङ्गरक्षकयोः च दुःस्थितिं दृष्ट्वा नितराम् आश्चर्यम् अनुभूतवन्तः ते ।

"अयि भोः ! किम् एवं पश्यन्तः सन्ति ? भवतां बुद्धिः विनष्टा किम् ? राज्ञा प्रेषिताः वयम् । त्रयः राजद्रोहिणः अस्माकम् अश्वान् चोरयित्वा धावितवन्तः सन्ति । गच्छन्तु, तान् गृह्णन्तु । येन ते ग्रहीष्यन्ते, तेन प्रभूतं राजद्रव्यं प्राप्स्यते" इति उक्तवान् ब्रह्मदण्डी ।

तेन अङ्गुल्या निर्दिष्टायां दिशि केचन साहसिनः ग्रामवासिनः धावितवन्तः । अन्ये केचन ब्रह्मदण्डिनं, तस्य अङ्गरक्षकौ च सगौरवं ग्रामं प्रति आनीतवन्तः ।

केशवादयः त्रयः अपि अश्वारूढाः भूत्वा गच्छन्तः आसन् । किन्तु अन्धकारेण आवृते मार्गे वृक्षशाखाः लताः कण्टकानि च अग्रे गमनाय प्रत्यूहं कुर्वन्ति स्म । अतः तेषाम् अपेक्षानुगुणं प्रयाणं वेगेन न प्रावर्तत । तावता हस्तेन दण्डान् गृहीत्वा अनुसरन्तः ग्रामीणा युवकाः दृष्टाः तैः त्रिभिः अपि ।

'वयम् इदानीं महाविपदि पतिताः' इति उक्तवान् जयमल्लः अनुसरतः युवकान् दृष्ट्वा ।

"विपदः सम्मुखीकरणम् इदम्प्रथमं तु न खलु अस्माकम् ? एषा आपत् न प्रथमा, न वा अन्तिमा । धैर्यच्युतिः मास्तु । साहसेन अपायः निवार्यताम् । तत्र दृश्यताम् । दीपस्य



कान्तिः दृश्यते । प्रायः सः कुटीरः वनवासिनां भवेत् । तत्र गच्छाम'' इति अवदत् वृद्धः ।

ततः सत्वरम् एव ते कुटीरदिशि अश्वान् प्रेरितवन्तः । तदा एव कस्यचित् वृक्षस्य पृष्ठभागात् ध्वनिः श्रुतः - ''के भवन्तः ? स्थीयतां तत्रैव'' इति ।

एतत् श्रुत्वा अनुक्षणं वृद्धः अश्वात् अवतीर्य अवदत् - ''भवान् कः इति वयं न जानीमः । वयं यात्रिणः स्मः । अस्मान् लुण्ठयितुं केचन लुण्ठाकाः अनुधावनं कुर्वन्तः आगच्छन्तः सन्ति । अतः वयम् अत्र आगताः'' इति ।

वृद्धस्य कथनं यावत् न समाप्तं तावता एव दीपः निर्विण्णः अभवत् । कश्चित् उन्नतः बलशाली दृढकायः शूलं गृहीत्वा वेगेन तत्र उपस्थितः अभवत् । सः केशवं जयमल्लं च दृष्ट्वा - ''किं भवन्तः अधोभागे विद्यमानात् ग्रामतः आगच्छन्तः सन्ति ? तस्य ग्रामस्य बहूनां लुण्ठनम् एव कार्यम्, अन्येषां तु विनोदाय शिरच्छेदनप्रवृत्तिः । भयं मास्तु भवताम् । भवतां रक्षणं मम दायित्वम्'' इति उक्त्वा पुनः अन्यपार्श्वे मुखं कृत्वा अवदत् - ''भोः, तान् आततायिनः लक्ष्यीकृत्य बाण-प्रयोगं कृत्वा मारयन्तु'' इति ।

प्रशान्तः सः प्रदेशः अकस्मात् कोलाहल-चीत्कारैः प्रतिध्वनितः अभवत् । वनवासिनः गुप्तरूपेण वृक्षान् आरुह्य ततः ग्रामीणानाम् उपरि बाणवर्षणं कृतवन्तः ।

ग्रामयुवकानाम् आशा आसीत् यत् राज्ञा दास्यमानं पारितोषिकद्रव्यं प्राप्तव्यम् इति । वनवासिनां तु नायकस्य आज्ञापालने कृत-कृत्यताभावः । बाणाघातात् कथमपि आत्मनं रक्षन्तः अग्रे आगतैः ग्रामयुवकैः सह वन-वासिनः दण्डयुद्धम् आरब्धवन्तः ।

तत् दृश्यं क्षणं यावत् अवलोक्य वन-जननेता शिरश्चालनपूर्वकम् अवदत् - ''एतत् आक्रमणं सफलतया सम्मुखीकुर्वन्ति अस्मदीयाः इत्यत्र मम कोऽपि संशयः नास्ति । तथापि रात्रिसमये भवतां कृते एषः प्रदेशः क्षेमदायकः नैव । अतः भवतः त्रीन् अपि गुप्तस्थानं प्रापयिष्यामि । आगच्छन्तु मया सह'' इति ।

जयमल्लः केशवः वृद्धः च अश्वानां खलीनं गृहीत्वा मन्दं मन्दं तम् अनुसृतवन्तः ।

– *(अनुवर्तते)*



वेताल-
कथा

# निराकरणस्य कारणम्

'आरब्धम् उत्तमजनाः न परित्यजन्ति' इत्यस्याम् उक्तौ श्रद्धावान् त्रिविक्रमः पुनः अपि वृक्षस्य समीपं गत्वा शवं स्कन्धे आरोप्य श्मशानदिशि प्रस्थितवान्। तदा वेतालः अवदत् - ''अये, राजन्! येषु विवेकः, लोकानुभवः च अद्वितीयः भवति तादृशाः बहवः भवन्ति लोके। तथापि तेषु केचन क्षणिकेन भावोद्वेगेन अन्तिमस्तरे सिद्धिं न अधिगच्छन्ति। भवान् अपि किं तादृशः एव? कस्यचित् साहाय्यं कर्तव्यम् इति धिया भवान् मध्यरात्रे एतस्मिन् घोरारण्ये भ्रमन् अस्ति इति भाति मम। 'येषां हितं कृतं ते कृतज्ञतापूर्वकं मम अपेक्षां पूरयेयुः' इति इच्छा भवतः अस्ति चेत् भवता



युवराजेन वसन्तसेनेन इव न व्यवहरणीयम् । भवन्तं जागरयितुम् अहं तस्य कथां विस्तरेण श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा –

गन्धर्वलोके चित्रवर्णिका नाम काचित् आसीत् । अद्भुतसुन्दर्याः तस्याः सुन्दरता सर्वैः अपि श्लाघ्यमाना आसीत् । स्वर्णमञ्जरी गन्धर्वराजस्य शक्तितेजस्कस्य एकमात्रपुत्री । चित्रवर्णिकायाः सौन्दर्यम् अधिकृत्य प्रचलतः वर्तालापस्य श्रवणेन सा महत्या असूयया ग्रस्ता जाता । अतः सा चित्रवर्णिकां द्विषति स्म सदापि ।

कदाचित् स्वर्णमञ्जरी पितरम् अवदत् – 'मया भूलोकः द्रष्टव्यः' इति । शक्तितेजस्कः पुत्र्याः एताम् अपेक्षाम् अनादर्तुम् अनिच्छन् तां भूलोकं प्रति अनयत् । तत्रत्यानि विचित्राणि वैशिष्ट्यानि, दर्शनीयानि स्थानानि च तस्यै सः अदर्शयत् । ततः प्रतिगता स्वर्णमञ्जरी भूलोकस्य विषये सर्वान् अपि रञ्जकतया अवदत् । अतः चित्रवर्णिकायाः मनसि अपि भूलोकदर्शनिच्छा प्रबला अभवत् ।

शक्तितेजस्कः एतं विषयं पुत्र्याः द्वारा ज्ञात्वा, चित्रवर्णिकां सभां प्रति आकार्य अवदत् – ''चित्रे ! मम अनुमतिं विना भूलोकं प्रति गमनम् अपराधाय । मां धिक्कृत्य यदि भवती भूलोकं गच्छेत् तर्हि गन्धर्वकन्यायाः भवत्याः सर्वाः अपि शक्तयः विनष्टाः भवेयुः । किन्तु भूलोकस्य अत्यन्तमहत्त्वभूतानि सर्वाणि स्थानानि पक्षाभ्यन्तरे यदि भवती द्रष्टुं शक्नुयात् तर्हि ताः शक्तयः भवत्या पुनः प्राप्येरन् । तथा शक्तयः प्राप्ताः चेदेव भवती पुनः गन्धर्वलोके पदं स्थापयितुम् अर्हा भवेत्'' इति ।

गन्धर्वराजस्य कथनं श्रुतवत्याः चित्रायाः भूलोकदर्शनिच्छा इतोऽपि अधिका जाता । सा शक्तिनाशसम्भावनाम् अपि उपेक्ष्य सत्वरम् एव भूलोकं प्रति प्रस्थितवती ।

आकाशमार्गेण यात्रां कुर्वत्या तया अरण्ये गभीरे खाते प्रवहन्ती काचित् नदी अवलोकिता । तस्यां नद्यां यथेष्टं स्नानं कृत्वा सा पुनः आकाशं प्रति डयितुं प्रयत्नं कृतवती । किन्तु तथा कर्तुं न शक्तं तया । 'एतावता मम शक्तयः विनष्टाः सन्ति' इति तदा तया अवगतम् ।

तस्मिन् एव समये तेन मार्गेण गच्छन् कश्चन अश्वारोही युवकः चित्रवर्णिकां दृष्ट्वा उक्तवान् – ''सुन्दरि ! भवदीयम् एतत् अद्भुतं सौन्दर्य

पश्यामि चेत् प्रतीयते यत् भवती भूलोकवासिनी न इति । मम दर्शनानन्तरम् अपि भवती अदृश्या न अभवत् इत्यनेन ज्ञायते - भवती सङ्कटे पतितवती अस्ति इति । मया उक्तं सत्यम् एव खलु ?'' इति ।

''भोः भूलोकवासिन् ! भवतः बुद्धिमत्ता अद्वितीया । अहं चित्रवर्णिका नाम गन्धर्वकन्या । भवतां लोकं द्रष्टुम् आगता अहं दिव्यशक्तिभिः रहिता अभवम्'' इति उक्तवती चित्रवर्णिका ।

सः युवकः स्वस्य परिचयं वदन् - ''मम नाम वसन्तसेनः इति । अहं कीर्तिचन्द्रिकाराज्यस्य युवराजः अस्मि । राज्याभिषेकतः पूर्वं देशभ्रमणं करणीयम् इति निर्णीय अहं देशसञ्चारं कुर्वन् अस्मि । अहं भूलोकस्य महत्त्वपूर्णानि स्थानानि दर्शयिष्यामि । तस्य प्रतिफलरूपेण भवती मां गन्धर्वलोकं दर्शयेत् । यतः तत्रत्याः शासनपद्धतीः अस्माकं राज्येऽपि अनुष्ठानपथम् आनेतुम् इच्छामि अहम्'' इति उक्तवान् ।

''युवराज ! भवतः विचारः श्लाघनीयः एव । किन्तु गन्धर्वलोकं प्रति गमनाय मया पुनः शक्तयः प्रतिप्राप्तव्याः भविष्यन्ति'' इति उक्त्वा गन्धर्वराजेन सह प्रवृत्तां चर्चां समग्रां श्रावयित्वा - ''शक्तितेजस्कः अस्माकं राजा । मम दिव्यशक्तीनां प्रतिप्राप्तये तेन कश्चन उपायः सूचितः अस्ति । पञ्चदशसु दिनेषु एतस्य लोकस्य महत्तराणि स्थलानि यदि अहं द्रष्टुं शक्नुयां तर्हि शापात् मुक्ता भवेयम् । तादृशानां स्थानानां विवरणं भवान् वक्तुं शक्नुयात् किम् ?'' इति पृष्टवती चित्रवर्णिका ।



तदा वसन्तसेनः अवदत् - ''पुण्यस्थानानि कुत्र सन्ति इति अस्माकं देशस्य पण्डिताः जानन्ति । अन्तिमं स्थानं कैलासगिरिः अस्ति । तत्रैव पार्वतीदेव्या सह शिवः विहारं करोति । ततः निकटे एव मानससरोवरः अस्ति । ततः कैलासगिरिः द्रष्टुं शक्यः'' इति ।

एतत् श्रुत्वा चित्रवर्णिका महता उत्साहेन उक्तवती - ''पक्षाभ्यन्तरे आवां तत्र गन्तुं शक्नुयाव किम् ?'' इति ।

''आम् । पञ्चदशभ्यः दिनेभ्यः पूर्वम् एव आवयोः तत्र गमनं शक्यं स्यात् । गमनावसरे मध्येमार्गं प्राप्यमाणानां स्थानविशेषाणां दर्शनम् अपि भवितुम् अर्हति'' इति उक्तवान् वसन्तसेनः ।

ततः उभौ अपि प्रस्थानं कृतवन्तौ । तौ विविधानि स्थानानि पश्यन्तौ दशसु दिनेषु



मानससरोवरं प्राप्तवन्तौ ।

पूर्णिमारात्रिः आसीत् सा । कौमुद्यां कैलासगिरिः स्वर्णराशिवत् शोभते स्म । कैलासगिरि दृष्ट्वा तौ शिरः अवनमय्य भक्त्या प्रणामं कृतवन्तौ ।

तत्समनन्तरम् एव चित्रवर्णिकायाः शरीरं दिव्यकान्त्या शोभमानम् अभवत् । सा पुनः गन्धर्वशक्तीः प्राप्तवती । सन्तुष्टा सती सा वसन्तसेनम् अवदत् – ''युवराज ! भवता यत् साहाय्यं कृतं तत् अहं जीवने कदापि न विस्मरिष्यामि'' इति ।

प्रवृत्तं सर्वम् अदृश्या सती पश्यन्ती आसीत् स्वर्णमञ्जरी । सा झटिति एव चित्रवर्णिकायाः वसन्तसेनस्य च विषयं पितरम् असूचयत् । एतत् ज्ञातवान् शक्तितेजस्कः शीघ्रमेव तत्र उपस्थितः अभवत् ।

चित्रवर्णिका विनम्रभावनया गन्धर्वराजम् अवदत् – ''एषः कीर्तिचन्द्रिकाराज्यस्य युवराजः वसन्तसेनः । एतेन अहं बहुधा उपकृता । गन्धर्वलोकं दर्शयिष्यामि इति अहं प्रतिज्ञातवती अस्मि । एतं वयम् अतिथिरूपेण नयाम'' इति ।

एतत् श्रुत्वा शक्तितेजस्कः क्रोधं प्रकटयन् – ''अस्माकं लोके मानवानां प्रवेशः निषिद्धः इति किं भवत्या विस्मृतम् ?'' इति तां तर्जयित्वा ततः अदृश्यः अभवत् ।

ततः चित्रवर्णिका वसन्तसेनम् उक्तवती – ''अस्माकं गन्धर्वराजस्य कथनं श्रुतं खलु भवता ? गन्धर्वलोकं प्रति भवतः नयनेन अहं क्लेशकूपे पतेयं निश्चयेन । तथापि अस्मल्लोकदर्शने भवतः प्रबला इच्छा यदि स्यात् तर्हि अहं भवन्तम् असमल्लोकं नेष्यामि

अवश्यम्'' इति ।

तदा वसन्तसेनः उक्तवान् -''भवत्याः एवंविधस्य कथनस्य श्रवणस्य अनन्तरम् अपि गन्धर्वलोकं द्रष्टुं कथम् अहम् उत्सहेय ? भवत्याः राजा एव मनःपरिवर्तनं प्राप्य स्वलोकं प्रति मां यदि निमन्त्रयेत् तर्हि अपि अहं तत्र पदं न निक्षिपेयम्'' इति ।

वसन्तसेनस्य एतेन वचनेन हृष्टा चित्रवर्णिका ततः अदृश्या अभवत् ।

एवं कथां श्रावयित्वा वेतालः अवदत् - ''महाराज ! कष्टं सोढ्वा वसन्तसेनः चित्रवर्णिकायाः साहाय्यं कृतवान् । तेन एव कारणेन सा दिव्यशक्तिं पुनः प्राप्तवती । गन्धर्वलोकं गत्वा तत्रत्याः शासनपद्धतीः दृष्ट्वा ताः स्वशासने अनुष्ठातव्याः इति वसन्तसेने प्रबला इच्छा आसीत् एव खलु ? तथापि चित्रवर्णिका यदा तं स्वलोकं नेतुं सज्जा अभवत् तदा तेन किमर्थम् उपेक्षाभावः दर्शितः ? सः तात्कालिकेन भावोद्वेगेन ग्रस्तः अभवत् किम् ? तेन महान् अविवेकः खलु प्रदर्शितः ? मम एतेषां प्रश्नानाम् उत्तरं जानता अपि भवता यदि न उच्येत तर्हि भवतः शिरः शतधा भग्नं भवेत्'' इति ।

तदा मौनेन स्थातुम् अशक्तः त्रिविक्रमः उक्तवान् - ''वसन्तसेनः चिन्तयति स्म यत् गन्धर्वाः उत्तमाः भवन्ति इति । अतः एव तत्रत्यानां शासनपद्धतीनाम् अनुसरणस्य इच्छा उद्भूता तस्मिन् । तदनन्तरं तेन ज्ञातं यत् गन्धर्वराजस्य निष्कारणकोपस्य कारणं स्वर्णमञ्जर्याः ईर्ष्या एव इति । चित्रवर्णिकायाः शापवृत्तान्तः अपि तेन ज्ञातः आसीत् एव । ततः सः अवगतवान् यत् गन्धर्वलोके अनुसरणयोग्याः गुणाः न सन्ति इति । अतः एव गन्धर्वलोकं प्रति गमनं तेन निराकृतम् । अन्यच्च, 'भवतः नयनेन मम कष्टं भविष्यति' इति वदन्ती चित्रवर्णिका 'भवतः इच्छा तीव्रा अस्ति चेत् अहं भवन्तं नेष्यामि एव' इति अवदत् । चित्रवर्णिकायाः कष्टं न ऐच्छत् वसन्तसेनः । अतः एव सः स्वनिर्णयं परिवर्तितवान् । शान्ततया एव तेन एषः निर्णयः कृतः । अत्र भावावेशस्य न कापि प्रसक्तिः'' इति ।

एवं राज्ञः मौनभङ्गं कर्तुं शक्तवान् वेतालः ततः अदृश्यः भूत्वा पुनरपि वृक्षस्य शाखाम् अवालम्बत ।






# अस्माकं राष्ट्रगीतस्य शताब्दोत्सवः


बङ्किमचन्द्रचटर्जी

१८७५ तमे वर्षे बङ्किमचन्द्रचटर्जी कलकत्तातः स्वग्रामं कण्टलपदं प्रति रेलयानेन प्रयाणं कुर्वन् आसीत् । यानस्य वातायनद्वारा बहिः दृष्टिं प्रसारितवान् सः प्राकृतिकदृश्यैः आकृष्टः अभवत् । प्रकृतिमातुः वर्णनयुक्तं पद्यं लेखनीयम् इति प्रेरणां प्राप्तवान् सः 'वन्दे मातरम्' इत्येतया शीर्षिकया युक्तं गीतम् अरचयत् । 'वन्दे मातरम्' इत्यस्य अर्थः 'मातः, त्वाम् अहं नमामि' इति । १८८२ तमे वर्षे 'आनन्द-मठ'नामकं कथाग्रन्थं सः अरचयत् । तत्र केचन संन्यासिनः रहसि मिलन्तः आङ्ग्लशासनस्य विरोधं कुर्वन्तः कस्मिंश्चित् प्रसङ्गे देश-भक्त्या प्रेरिताः सन्तः 'वन्दे मातरम्' इति गीतं गायन्ति । अनन्तरकाले एषः कथाग्रन्थः गीतं च बहुप्रसिद्धं जातम् । वाराणस्याम् आयोजिते भारतराष्ट्रियकाङ्ग्रेस्-वार्षिकाधिवेशने १९०६ तमे वर्षे सप्टम्बरमासे कविः रवीन्द्रनाथठाकुरः एतस्य गीतस्य रागसंयोजनं कृत्वा एतत् गीतं स्वयम् अगायत् । तदनन्तरं निर्णयः कृतः यत् प्रतिवार्षिकाधिवेशनम् अपि आरम्भे गीतमेतत् गातव्यम् इति । रवीन्द्रनाथठाकुरवर्येण रचितं 'जन गण मन' इत्येतत् गीतं राष्ट्रगीतत्वेन, 'वन्दे मातरम्' इत्येतत् राष्ट्रगानत्वेन च अनुमतम् अस्ति संविधानेन । सप्टम्बरमासे भारते 'वन्दे मातरम्' इत्यस्य गीतस्य शताब्दोत्सवः आचरितः, यतः इतः शतात् वर्षेभ्यः पूर्वम् तन्नाम १९०६ तमे वर्षे काङ्ग्रेस्-अधिवेशनम् एतेन गीतेन आरब्धम् आसीत् ।



# गजराजः

अरुणानद्याः तीरे कृष्णचैतन्यस्य गुरुकुलम् आसीत् । अध्ययनं सम्पूर्णं समाप्य पञ्च विद्यार्थिनः यदा स्वगृहं प्रति प्रतिगन्तुम् उद्युक्ताः तदा तान् सम्बोधयन् कृष्णचैतन्यः - ''गुरुकुलप्रवेशसमये भवन्तः किमपि न जानन्ति स्म । किन्तु इदानीं भवत्सु अमरकोशादीनां ग्रन्थानां पूर्णं ज्ञानम् अस्ति । एतत् सर्वं कथं साधितम् अभवत् ? इतः गत्वा भवन्तः बाह्यप्रपञ्चे पदं निक्षिपन्ति । जीवनं नाम पुष्पैः सज्जः सुलभगम्यः मार्गः न । सः कण्टकादिभिः पूर्णः सङ्घर्षमयः च । आत्मविश्वासः निरन्तरप्रयत्नः च मानवे भवेत् । एतदुभयम् अपि यदि कस्मिंश्चित् जने दृश्येत तर्हि सः अवश्यं प्रगतिं प्राप्नुयात् एव । गजराजः यद्यपि अतीव बलवान् भवति, तथापि सः यदि स्वस्य बलं न जानीयात् तर्हि ततः कोऽपि लाभः न भवेत् । उदाहरणरूपेण काञ्चित् कथां श्रावयामि । सावधानं शृण्वन्तु'' इति उक्त्वा काञ्चित् कथाम् आरब्धवान् -

वीरेशः जन्तून् पक्षिणः च स्वनियन्त्रणे स्थापयित्वा बहुविधाः चेष्टाः पाठयित्वा, तेषां प्रदर्शनं कृत्वा आजीविकां निर्वहति स्म । कदाचित् अरण्ये गच्छता तेन कश्चन गजशावकः गर्ते पतितः दृष्टः । सः तं गजशावकं गर्तात् उन्नीय गृहम् आनीय रज्ज्वा स्तम्भे बद्धवान् । तदनन्तरं तस्मै खाद्यं दत्तवान् ।

गजशावकेन मातापितरौ स्मृतौ । अतः अरण्यं गन्तव्यम् इति इच्छा तस्मिन् उत्पन्ना । बहुधा प्रयत्नः कृतः चेदपि सः पादे बद्धां रज्जुं त्रोटयितुम् शक्तः न अभवत् । पुनः पुनः प्रयत्नात् सः श्रान्तः अभवत् । अन्ततो गत्वा सः निर्णीतवान् यत् बन्धनात् मुक्तिः मम सामर्थ्यस्य बहिर्भूतं कार्यम् इति । अतः मातापित्रोः दर्शनाशां परित्यज्य सः वीरेशस्य कथनानुसारं व्यवहारं कर्तुम् आरब्धवान् ।



एवं कतिपयेषु वर्षेषु अतीतेषु सः गजः युवावस्थां गतः । बलवान् अपि अभवत् ।

अत्रान्तरे वीरेशः समीपस्थात् अरण्यतः कञ्चन भल्लूकम् आनीय दृढया रज्ज्वा बद्धवान् । सः भल्लूकः अपि रज्जुनाशने बहुधा प्रयत्नम् अकरोत् । किन्तु सः अपि असफलः एव । वीरेशस्य आदेशानुसारम् अभिनयः यदि न क्रियेत तर्हि कशया ताडनं प्राप्यते स्म । कथनानुगुणं व्यवह्रियते चेत् तु यथेष्टं भोजनं प्राप्यते स्म ।

कदाचित् वीरेशः भल्लूकं सम्यक् ताडितवान् । भल्लूकः आरात्रि वेदनाम् असहमानः निद्राम् अपि न अलभत । भल्लूकस्य दुस्स्थितिं दृष्ट्वा दयार्द्रहृदयः सन् गजः उक्तवान् – ''भोः मित्र ! किमर्थं व्यर्थमेव ताडनं प्राप्यते भवता ? स्वामिना यथा आदिश्यते तथा करोतु विना विरोधम् । तस्य वचनं पाल्यते चेत् पूर्णोदरं भोजनम् अपि प्राप्यते । विनायासं जीवनं प्रचलति अपि'' इति ।

''गजराज ! भवान् अपि किं स्वामिनः पक्षपाती एव ? खादितुं तेन यत् दीयते, तेन मम उदरं पूर्णं भवेत् । किन्तु किं तेन ? अहम् अरण्ये स्वच्छन्दं भवामि स्म । भ्रमामि स्म च । तादृशं मां बन्धिनं कृत्वा बहुधा पीडयन् अस्ति सः । स्वस्य जीवननिर्वहणं कर्तुं सः मां पीडयति । यावत् एषः क्लेशः परिहृतः न भवेत् तावत् अहं सुखी न भवेयम्'' इति अवदत् भल्लूकः क्रोधभावेन दीनतया च ।

''इतः मोक्षप्राप्तिसाधनं तु भवता न शक्यम् । भवता इव मया अपि पूर्वं प्रयत्नः कृतः । समग्रस्य सामर्थ्यस्य उपयोगेन अपि बन्धनात् मया मुक्तिः न प्राप्ता'' इति स्वस्य

विवशतां प्रकटीकुर्वन् अवदत् गजः ।

गजस्य वचनस्य श्रवणेन भल्लूकः उच्चैः हसितवान् ।

''भवान् किमर्थं हसितवान् ? किं मम कथा हास्यकणिकायते ?'' इति पृष्टवान् गजः खिन्नः भूत्वा ।

''गजराज ! स्वसामर्थ्यस्य कल्पना नास्ति भवतः । रज्जुत्रोटनं भवते न कष्टाय । सुलभ-साध्यं तत् । स्तम्भमेव उत्पाटयितुं शक्नोति भवान् । एतत्सर्वं तृणस्य उत्पाटनम् इव सरलम्'' इति उक्तवान् भल्लूकः ।

''मया पूर्वमेव उक्तं खलु - शतेन अपि प्रयत्नैः प्रयोजनं किमपि न प्राप्तं मया इति'' इति उक्तवान् गजः ।

''यदा बाल्यावस्था आसीत् तदा भवान् प्रयत्नं कृतवान् आसीत् । किन्तु इदानीं पर्वतम् अपि चूर्णीकर्तुं पर्याप्तमात्रेण बलं सम्पादितम् अस्ति भवता । भवान् सकृत् प्रयासं कृत्वा पश्यतु । तदा भवता स्वयं ज्ञायते यत् आत्मना कियत् बलं प्राप्तम् अस्ति इति'' इति अवदत् भल्लूकः गजं प्रोत्साहयन् ।

एतानि भल्लूकवचनानि गजस्य उत्साह-पूरणे सफलानि अभवन् । ततः गजः रज्जुं खण्डशः अकरोत् । ततः उभौ अपि अरण्यं प्रति धावितवन्तौ । अरण्यं प्रविश्य गजेन उक्तम् - ''मित्र ! अहं नितराम् अज्ञानी आसम् । भवान् यदि न अवदिष्यत् तर्हि स्वबलस्य अभिज्ञानम् एव न अभविष्यत् मम'' इति ।

''लोके बहूनाम् स्थितिः एषा एव । भयग्रस्ताः ते प्रयत्नम् एव न कुर्वन्ति । यैः प्रयत्नः न क्रियते तैः सफलता कथं वा प्राप्येत ?'' इति अवदत् भल्लूकः ।

तदनन्तरम् उभौ अपि स्वबन्धुभिः सह मिलित्वा सुखमयं जीवनं यापितवन्तौ ।

एतां कथां श्रावयित्वा कृष्णचैतन्यः - ''भवन्तः अपि स्वसामर्थ्यं कदाचिदपि न विस्मरेयुः । निरन्तरं प्रयत्नः करणीयः । एतेन स्वयं सुखेन जीवन्तः भवन्तः अन्यान् अपि सुखिनः कर्तुम् अर्हन्ति'' इति वदन् शिष्यान् आशीर्भिः अनुगृहीतवान् । ते भक्तिपूर्वकं तं प्रणम्य ततः स्वं स्वं गृहं प्रति प्रस्थितवन्तः ।



# वार्ताविषयतां गताः बालाः




## विद्यार्थिन्या प्राप्तं ग्रन्थकर्तृगौरवधनम्

नवदेहलीस्थया राष्ट्रियशैक्षणिकानुसन्धानशिक्षणपरिषदा (एन्.सी.ई.आर्.टी.) ऐदम्प्राथम्येन दशमकक्ष्याविद्यार्थिन्यै कस्यैचित् ग्रन्थकर्तृधनं दत्तम् अस्ति एषु दिनेषु । तत् प्राप्तवत्याः नाम यु.बी.माया इति । तया लिखितः प्रवासानुभवलेखः कश्चन पाठ्यपुस्तके योजितः इत्यतः तस्यै तत् धनं दत्तम् । तस्याः पिता प्रधानाचार्यः । सः स्थानान्तरगमनादेशं प्राप्य यदा अन्यत् नगरं प्रति प्रस्थितः तदा तेन सह प्रस्थिता माया यात्रावसरे प्राप्तान् अनुभवान् लिखितवती आसीत् लेखरूपेण । स च लेखः केरलराज्ये मलयालभाषया मुद्र्यमाणायां 'युरेका'नामिकायां बालपत्रिकायां प्रकाशितः अपि । गौरवधनरूपेण ३०००/- रूप्यकाणि दत्त्वा एन्.सी.ई.आर्.टी.संस्था तया लिखितं लेखं पाठ्यपुस्तके अयोजयत् । एषः लेखः यदा लिखितः तदा सा आसीत् षष्ठकक्ष्यीया ।

## गिन्नीसपुस्तके नाम्नः उल्लेखः




एकादशवर्षीयस्य निश्चलनारायणस्य नाम एतावता एव गिन्नीसपुस्तके समायोजितम् अस्ति । पञ्चदशानां निर्णेतॄणां समक्षे २२५ वस्तूनि अभिज्ञातुं शक्तवान् सः । क्षणात्मकम् अपि विलम्बम् अकुर्वन् तेषां वस्तूनां नामानि सः द्वितीयवारम् अपि उच्चारितवान् । तस्य अध्यापकेन जयसिंहरविरालेन कृतः विक्रमः पूर्वम् उल्लेखितम् आसीत् तस्मिन् पुस्तके । गुरुम् अपि अतिशयितवतः नारायणस्य नाम्नः उल्लेखः इदानीं कृतः अस्ति । हैदराबादनगरस्थे गीताञ्जलिविद्यालये षष्ठ्यां कक्ष्यायाम् अध्ययनं कुर्वता अनेन २००५ तमे वर्षे डिसेम्बरमासे एव २०० वस्तूनां स्मरणस्य प्रयासः आरब्धः । गणितक्षेत्रे प्राथमिकगणितप्रयोगेषु मूलसिद्धान्तस्य सरलीकरणम् अधिकृत्य षड्भिः अङ्कैः उपेतं पुस्तकं रचितम् अस्ति अपि एतेन । वस्त्रेण नेत्रबन्धनं कृत्वा चतुरङ्गं क्रीडितुम् अपि नैपुण्यं साधितम् अस्ति अनेन ।

# पुण्यं पापं च

कञ्चनदेशस्य राजा धीरसिंहः । तस्मिन् राज्ये आस्थाननर्तकी आसीत् वसन्तमालिनी । यद्यपि सा सामान्ये कुले जन्म प्राप्तवती, तथापि नृत्यशास्त्रस्य अध्ययनं सम्यक् कृत्वा सा प्रसिद्धनर्तकी इति ख्यातिं प्राप्तवती । तस्याः प्रतिभाम् अभिज्ञाय राजा तां स्वस्य आस्थानस्य नर्तकीं कृतवान् आसीत् । तस्याः नृत्यविन्यासान् रूपभङ्गीः च दृष्ट्वा सर्वे मन्त्रमुग्धाः भवन्ति स्म ।

तस्मिन् वर्षे राज्ञ्याः यामिनीदेव्याः जन्मदिनस्य आचरणं महता वैभवेन करणीयम् इति निश्चयः कृतः । अतः तदर्थं राजधान्यां सन्नाहाः आरब्धाः अपि । राजा सङ्कल्पं कृतवान् यत् एतदवसरे राजनर्तक्याः सम्मानः अवश्यं करणीयः इति ।

किन्तु एषः निर्णयः अन्येषां कलाकाराणां पण्डितानां च सन्तोषाय न जातः । यत् गौरवम् अस्माभिः न प्राप्तं तत् राजनर्तक्या प्राप्यते



इत्यतः ते असूयाग्रस्ताः जाताः । तेषाम् अन्तरङ्गे महान् तापः उत्पन्नः । अतः राजनर्तक्याः अपमानाय ते योग्यम् अवसरं प्रतीक्षमाणाः अतिष्ठन् ।

राज्ञ्याः जन्मोत्सवदिने राजसभा आरब्धा । नृत्यवेषं धृत्वा वसन्तमालिनी सभायाम् उपस्थिता आसीत् ।

राजा धीरसिंहः मूल्यवद्भिः उपायनैः तां सत्कृत्य तस्याः नृत्यप्रतिभां प्रशंसन् अवदत् – "अस्माकम् आस्थाननर्तकी नृत्यकौशलेन अप्सरसः अपि अतिशेते । एतादृशी नर्तकी प्रायः लोके अन्या न स्यात् । एषा अस्माकम् आस्थाने अस्ति इति तु महतः सौभाग्यस्य विषयः । यत् नृत्यकौशलं देवाः अपि द्रष्टुं न शक्नुयुः तत् कौशलं वयम् अत्र पश्यन्तः स्मः । अतः वयम् एव भाग्यशालिनः स्मः निश्चयेन" इति ।



सभासदः करताडनेन हर्षं प्रकटयन्तः राज्ञः एतत् कथनं समर्थितवन्तः । तावता राज्ञः अनतिदूरे उपविष्टः कश्चन पण्डितः उत्थाय – "महाराज ! भवान् तु कलापोषकः । कलापोषणविषये भवत्सदृशः प्रायः अन्यः नास्ति । सामान्ये कुले जाताम् एतां वसन्तमालिनीं भवान् आस्थाननर्तकीं कृतवान् यत् तदेव भवतः कलापोषकत्वं प्रमाणीकरोति । किन्तु अप्सरोभिः तस्याः तोलनं, देवैः अपि यत् द्रष्टुम् अवसरः न प्राप्यते तादृशं कौशलम् एतस्याः इति कथनं च उचितं न इति भावयामि अहम् । मम कथने यदि किमपि अनौचित्यं स्यात् तर्हि क्षन्तव्यः अहम्" इति अवदत् ।

एतदनन्तरं कश्चन नृत्यपटुः उत्थाय अवदत् – "मया बह्वीनां नर्तकीनां प्रतिभा दृष्टा अस्ति । वसन्तमालिन्याः नृत्ये स्वाभाविकता न्यूना, बाह्याडम्बरः च अधिकः । द्रष्टारः सन्तुष्टाः भवन्ति इत्येतावन्मात्रम् एव कौशलस्य मापकं न भवति । अविशिष्टा एषा भवता सत्कृता यत् तत् योग्यं न इति चिन्तयामि अहम् । अस्मद्राज्येन यत् पापं कृतं तस्यैव परिणामः एषः" इति ।

तदा आस्थानविदूषकः गङ्गाधरः उत्थाय अवदत् – "महाप्रभो ! अस्माकं देशेन पापम् आचरितम् उत पुण्यं सम्पादितम् इति अहं तु न जाने । तथापि एषा वसन्तमालिनी पापं



पुण्यं च सम्पादितवती अस्ति इति तु अहं सम्यक् जानामि'' इति ।

एतत् श्रुत्वा आश्चर्यम् अनुभवन् राजा अवदत् – ''एते केचन वदन्ति यत् एतया पापम् आचरितम् इति । तया पापं पुण्यं च आचरितम् इति भवता उच्यते । भवतः कथनस्य आशयः कः ?'' इति ।

''भवान् तु महाकलापोषकः । भवतः राज्ये जन्म प्राप्तं यत् तत्तु पुण्यस्य एव फलम् । अतः एव तया अद्य भवतः आस्थाने सम्माननं प्राप्तम् । किन्तु तया पूर्वं कस्मिंश्चित् जन्मनि पापम् अपि आचरितम् एव । तदेव पापम् इदानीं ताम् अत्र बाधमानम् अस्ति'' इति अवदत् विदूषकः ।

''पापं बाधते इति केन आधारेण वदति भवान् ?'' इति अपृच्छत् राजा ।

''आस्थाने विद्यमानेन स्त्रीजनेन यादृशं सम्माननं प्राप्तं तादृशम् अस्माभिः न प्राप्तं खलु इति असूया अत्रत्यानाम् । एतादृशानाम् असूयाग्रस्तानां पुरतः नृत्यं यत् करणीयम् अभवत् तत् तु पापस्य एव फलं भवितुम् अर्हति खलु'' इति अवदत् विदूषकः ।

इतः पूर्वं ये वसन्तमालिन्याः विषये अयुक्तं वचनम् उक्तवन्तः आसन् ते एतत् श्रुत्वा लज्जया शिरः अधः कृत्वा स्थितवन्तः ।

तदा राजा अवदत् – ''कौमुदीं प्रसारयन्तं चन्द्रं दृष्ट्वा अपि यः आनन्दम् न अनुभवति सः वस्तुतः मूर्खः एव । एवमेव सहवर्तिनि जने यः गुणान् कौशलं वा न पश्यति, गुणवतः आदरं च यः न करोति, सः तु विवेकी इति निर्देशं न अर्हति । गुणेषु अनादरः अल्पस्य लक्षणम् । तादृशैः लक्षणैः उपेताः केचन मम आस्थाने सन्ति इति तु महतः विषादस्य एव विषयः'' इति ।

आत्मनः समर्थने कमपि मार्गम् अपश्यन्तः पण्डितादयः मौनेन अतिष्ठन् ।

आत्मानं बहुमन्यमानाः ये वसन्तमालिन्याः विषये अनुचितं वचनम् उक्तवन्तः आसन् तेषां वास्तविकं स्वरूपम् उपायेन प्रकाशितवान् आसीत् विदूषकः । अतः जनाः साधुवादं वदन्तः उच्चैः करताडनं कृतवन्तः ।

***– जि.जे. जोशी (१४)***
***सेण्ट् जान् चर्च् हैस्कूल्, हैदराबाद***

# स्नेहस्मारकं सस्यम्

सः जनवरीमासः । हेमन्तस्य सुगन्धः वायौ प्रसरन् आसीत् । अग्रिमजीवनमार्गम् अन्विष्यन् ग्रामात् बहिः आगतस्य मम अतीतानि कतिपयानि वर्षाणि ।

अहं ग्राममार्गेण सुदूरं पद्भ्यां चलन् दीर्घेण श्वासोच्छ्वासेन ग्रामवायुम् अधिकतया प्राप्तुं प्रयासम् अकरवम् ।

यत्र पश्यामि तत्र नूतनसस्यसन्ततिः । सर्वत्र हेमवर्णकुसुमवाटिका । मम दृष्टिः तेषां पुष्पाणाम् उपरि पतिता । कश्चन पुष्पविशेषः मम दृष्टिम् आकर्षत् ।

तत् आसीत् बोगनवीलासस्यम् ।

तस्य दर्शनात् प्राचीनानि दिनानि मम स्मृतिपथम् आगतानि । पदैः अभिव्यञ्जयितुम् अशक्या स्मृतिः सा । कदाचित् अभिव्यक्तये शब्दाभावः अपि !




सोमय्यः मम मित्रं नासीत् । यतः मत्तः वर्षेण ज्येष्ठः सः । सः मम सहपाठी अपि न । यतः सः निरक्षरः । तथापि सः मित्रादपि अधिकस्नेही मयि । कदाचित् सः तातटक-डायनं कथम् इति पाठयति स्म माम् । अहं कदाचित् तं पठनं लेखनं च पाठयामि स्म । कदा आवां परस्परम् अविभाज्यौ इव अभवाव इति अहं न जानामि ।

मत्स्यग्रहणं, वृक्षारोहणं, सस्यपोषणम् इत्यादिकं कथम् इति, निसर्गप्रीतिः कथं कर्तव्या इति च सः माम् अबोधयत् । 'यदा सस्यं पुष्प्यति तदा तत् सन्तुष्टम् इत्यर्थः, यदा तत् म्लानं दृश्यते तदा तस्य खिन्नता इति मन्तव्यम्' इति मां बोधितवान् सः ।

अग्रिमे काले आवाभ्यां बहवः मार्गाः क्रान्ताः । वयं तं ग्रामं परित्यज्य दूरस्थे नगरे वासम् आरब्धवन्तः । आवयोः वियोगः जातः । किन्तु बोगनवीलासस्यं तु नीतं मया अविस्मृत्य । सोमय्यस्य स्मरणार्थं तत् सस्यम् आरोपितं मया गृहस्य पुरतः । हेमन्तर्तुः यदा उपस्थिता भवति तदा अहं तस्मिन् सस्ये कलिकोत्पत्तिं प्रतीक्षे स्म, यथा आवाभ्यां बाल्ये क्रियते स्म ।

अहं तत्र अगच्छं, यत्र सोमय्यः वसति स्म । मया सः तत्कुटुम्बसदस्याः वा न

दृष्टाः तत्र । 'ते कुत्र सन्ति ?' इति प्रतिवेशिनः पृष्टाः मया । किन्तु कोऽपि विवरणं न जानाति स्म । भाग्यवशात् पूर्वपरिचितः कश्चित् वृद्धः अमिलत्, यः सोमय्ये प्रीतिमान् आसीत् ।

यद्यपि सः माम् अभिज्ञातुं न शक्तवान् तथापि अहं सोमय्यस्य मित्रम् इति ज्ञात्वा सः माम् अपृच्छत् - ''आजीविकान्वेषणाय कुत्रचित् गतवतः सोमय्यस्य कृते भवान् एकं कार्यं कर्तुं किं शक्नुयात् ?'' इति ।

मम प्रत्युत्तरस्य प्रतीक्षाम् अकृत्वा एव सः प्रकोष्ठं प्रविश्य सोमय्यस्य कानिचन वस्तूनि आनीय दर्शयित्वा गृहस्य पृष्ठभागस्य उपवनतः जीर्णं छिन्नं च कञ्चित् पत्रखण्डं, बोगलवीलासस्यं च आनयत् ।

''सस्यम् एतत् वर्ध्यताम् इति तेन प्रार्थितः आसम् अहम् । किन्तु वार्धक्यकारणेन एतस्मै सस्याय जलस्य दानम् अपि कदाचित् अहं विस्मरामि । एतत् सस्यं सोमय्यस्य अपत्य-समानम् । भवान् एतत् नेतुं किं शक्नुयात् ? प्रेषणाय तेन पत्रमेतत् मह्यं दत्तम् अस्ति । अस्य पत्रस्य प्रेषणेन भवान् मम साहाय्यं कुर्यात् किम् ?'' इति पृष्टवान् सः ।

किमपि वक्तुं न शक्तं मया । अवरुद्ध-कण्ठः अहम् - 'एतत् उभयम् अपि अहं अवश्यं करोमि' इति अवदम् ।

यदा पत्रं परिशीलितं तदा तत्र मम सङ्केतः एव लिखितः दृष्टः मया । तच्च पत्रम् एवम् आसीत् -

*प्रियमित्र !*

*एतत् मम प्रथमं पत्रम् । अन्तिमम् अपि भवेत् कदाचित् । यतः वयम् एतत् स्थानं त्यजन्तः स्मः । न ज्ञायते, कुत्र कार्यं प्राप्येत, अग्रिमः च सङ्केत कः इति । भवता दत्तं बोगनवीलासस्यं नेतुं न शक्तं मया । तत् सस्यं प्रवृद्धम् अस्ति इदानीम् ।*

*भवान् कार्येषु व्यग्रः इति मन्ये । अतः एव पत्रं न लिखितं स्यात् भवता । यदि शक्यम्, अग्रे पत्रं लेखिष्यामि भवते ।*

*भवदीयः सुहृत्,* ***सोमय्यः***

पत्रस्य उपरि यः सङ्केतः लिखितः दृष्टः स तु आसीत् बहुपूर्वतनः । 'एतादृशानि अन्यानि अपि बहूनि पत्राणि प्राचीनसङ्केतं प्रति गतानि स्युः' इति चिन्तितं मया ।

सस्यं पत्रं च स्वीकृत्य अहं ग्रामम् अत्यजम् । त्रयाणां हेमन्तर्तूनाम् अनन्तरं तत् सस्यं पुष्पितं सत् रमणीयतया अशोभत । तदा मया चिन्तितं 'सोमय्यः अपि कुत्रचित् एवमेव हसन्मुखः सन् जीवन् स्यात्' इति ।

***– सौरववासः (१४)***
***बलासोर् जिला स्कूल,***
***बलासोर (ओरिसा)***



सुदीप्ता रौल् (१३) बलासोर् जिला स्कूल्
बलासोर्, ओरिस्सा

**प्रथमा**



गजानन ए. यादव् (१६)
यवतमाल्
महाराष्ट्रम्

प्रीति एम्. शेट् (१३)
श्री विद्यामन्दिरम्
वय्यालिकावेल्, बेङ्गलूरु

**द्वितीयः**



**तृतीया**



एषः पुटः, अभिमुखस्थः पुटः च २००६ तमवर्षस्य चित्रलेखनस्पर्धायाः विजेतॄन् परिचाययति । प्रथमं पारितोषिकं - रू.३००/-, द्वितीयं पारितोषिकं रू. २५०/-, तृतीयं पारितोषिकं रू.२००/-, प्रोत्साहकानि पारितोषिकाणि रू.१५०/- । सर्वे पारितोषिकविजेतारः सहार्दम् अभिनन्द्यन्ते अस्माभिः ।





एस्. विभा (५)
केन्द्रीयविद्यालयः
बेङ्गलूरु



मोनिदीपराणा (१२)
२४ परगणाः
पश्चिमवङ्गः

एस्. ऐ. प्रिनिता (११)
सेण्ट् पीटर्स् ग्रामर् स्कूल्
सिकन्दराबाद





# पक्षिभिः कृतः उपकारः

जबालपुरनामके ग्रामे रघुः मनुः चेति मित्रद्वयं निवसति स्म । रघुः कृषिकार्येण आजीविकां निर्वहति स्म, मनुः च वाणिज्येन । मनुः वाणिज्ये महतीं हानिम् अनुभूय निर्धनः अभवत् । तदीयः धनराशिः हिमखण्डवत् अदृश्यः अभवत् । एतादृशस्थितौ सः मित्रस्य रघोः समीपं गत्वा साहाय्यं याचितवान् । रघुः मनोः कृते एक-एकरप्रमाणकस्य क्षेत्रस्य दानेन न्यरूपयत् यत् आवयोः मैत्री कृष्णसुदाममैत्री-समाना इति ।

रघोः सकाशात् प्राप्ते कृषिक्षेत्रे मनुः कर्षणम् आरब्धवान् । तदा एकत्र तेन कश्चन कलशः प्राप्तः, यः सुवर्णाभूषणैः पूर्णः आसीत् । कलशस्य प्राप्त्यनुक्षणं सः 'एतम् अहं रघवे अर्पयामि' इति विचिन्त्य तस्य गृहम् अगच्छत् ।

प्रवृत्तं श्रुत्वा रघुः उक्तवान् - ''यतः भवते दत्ते क्षेत्रे प्राप्तम्, अतः तत् भवदीयम् एव । तस्य उपयोगे पूर्णः अधिकारः भवतः एव'' इति । 'कलशः भवदीयः, न तु मदीयः' इति उभौ अपि परस्परं वदतः स्म ।

ग्रामजनाः एतौ उक्तवन्तः - 'एतस्य परि-हाराय दूरस्थे ग्रामे वसतः ग्रामाधिकारिणः निकटं गच्छताम्' इति । तदनुगुणं तौ पार्श्व-ग्रामस्थस्य अधिकारिणः रामलालस्य समीपं गतवन्तौ । एकान्ते रामलालं रघुः अवदत् - ''श्रीमन् ! मनुः महास्वाभिमानी । क्षेत्रम् अतिरिच्य अन्यविधं साहाय्यं सः न इच्छति इति जानन् अहं स्वयम् एव मम पत्न्याः सुशीलायाः पुत्र्याः सङ्गीतायाः च आभूषणानि कलशे पूरयित्वा तं कलशं तस्य क्षेत्रे भूमौ स्थापितवान् आसम्'' इति ।

अनन्तरदिने रामलालः निर्णयम् अश्रावयत् - ''लब्धं निधिं मनुः एव स्वीकुर्यात् । जगति विद्यमानानां समीचीनसस्यानां, फलानां च बीजानि सम्पाद्य तस्मिन् क्षेत्रे वपनेन सः कस्याश्चित् रमणीयायाः वाटिकायाः निर्माणं करोतु । अवशिष्टेन धनेन पुनः वाणिज्यम् आरभ्य अनुभवेन लाभः प्राप्यताम्'' इति ।

रामलालस्य अनुज्ञया रघोः मनोः च आशीर्वादेन च मनोः पुत्रः सूर्यः निश्चितवान् यत् कानिचन आभूषणानि स्वीकृत्य नगरं गत्वा विक्रीय बीजानि क्रीत्वा उत्तमानां फल-पुष्पाणां वर्धनं करणीयम् इति । नगरं गच्छता तेन मार्गे बहुविधान् सुन्दरान् पक्षिणः पञ्जरैः नयन् व्याधः कश्चन अवलोकितः ।

सूर्यः व्याधम् अवदत् - "भोः, एतानि आभूषणानि स्वीकृत्य भवतः सर्वान् पक्षिणः मह्यं ददातु" इति । व्याधः महता सन्तोषेण आभरणानि स्वीकृत्य पक्षिणः तस्मै समर्पितवान् । सूर्यः सर्वान् पक्षिणः मुक्तान् कृतवान् । अनन्तरं नगरं गत्वा तत्र कस्यचित् धनिनः समीपे उद्योगे लग्नः अभवत् सः ।

प्रायः द्वित्राणि वर्षाणि यावत् सूर्यः नगरे कठिनपरिश्रमं कृतवान् । परिश्रमेण महान्तं धनराशिं सङ्गृह्य सः ग्रामम् आगतवान् ।

रघुः मनुः च तस्य गृहे उपविश्य सम्भाषमाणौ आस्ताम् । मनुः रघोः हस्तौ गृहीत्वा सहर्षम् अवदत् - "न जाने, जगतः विविधाः पक्षिणः कुतश्चित् अस्माकं क्षेत्रम् आगत्य विविधबीजपातनेन अनेकप्रकारकाणां पुष्पाणां फलानां च वृक्षस्य वर्धने कारणीभूताः अभवन् । ततश्च तेन क्षेत्रेण मनोरमा वाटिका इति ख्यातिः प्राप्ता अस्ति" इति ।

एतत् श्रुत्वा सूर्यः पितरम् अवदत् - "एतत्सर्वं पञ्जरस्थानां देवपक्षिणां कार्यम् । अवश्यं ते पक्षिणः देवलोकात् एव आगताः स्युः, येषां मोचनेन मया पुण्यं सम्पादितं, वृक्षवर्धने तेषां सहयोगः च प्राप्तः । महता परिश्रमेण सम्पादितं धनम् अपि मत्सकाशे एव अस्ति । एतस्य उपयोगे अधिकारः भवतः एव" इति । एतत् श्रुत्वा रघुः मनुः च नितरां तुष्टौ अभवताम् ।

तदनन्तरदिने मनुः स्वपुत्रेण सह रघोः गृहं गत्वा उक्तवान् - "मित्र ! मम पुत्रस्य, भवतः पुत्र्याः सङ्गीतायाः च पाणिग्रहणनिश्चयार्थम् आगतवान् अस्मि । भवान् किम् एतत् अनुमन्येत ?" इति ।

परमसन्तुष्टः रघुः मनोः प्रस्तावं सहर्षम् अङ्गीकृतवान् । ग्रामाधिकारी रामलालः एतां वार्तां श्रुत्वा - "महतः सन्तोषस्य विषयः एषः । भवतोः स्नेहः बान्धव्यकारणं जातः इत्येतत् युक्तम् एव" इति अवदत् ।

**- सुरभि श्रीवास्तव् (१४)**
**नन्दविकासविद्यालयः**
**गोरखपुरम् (उ.प्र.)**



# मीनायाः पाञ्चालिका

चित्रपुरे निवसन्ती मीना बुद्धिमती उत्तम-स्वभावयुक्ता मुग्धा बालिका । माता-पितरौ तस्याः अत्यन्तं प्रेमपात्रम् ।

अद्य सा महता उत्साहेन दृश्यते । यतः तस्याः जन्मदिनपर्व आचरितुम् अमेरिकातः अग्रजः आगच्छति । तस्याः कृते सुन्दरीं पाञ्चालिकाम् अपि आनयति ।

अग्रजस्य स्वागताय सा अपि मातापितृभ्यां सह विमानाश्रयं गतवती । घण्टाद्वयात्मकेन विलम्बेन विमानं तदग्रजम् आनयत् । अग्रजस्य मेलनेन परमहृष्टा अभवत् सा ।

शयनार्थं गता सा अग्रिमविद्याभ्यासस्य स्वप्नं पश्यन्ती आसीत् । सा बुद्धिमती चतुरा च । सर्वदा अधिकान् अङ्कान् प्राप्य प्रथमं स्थानम् आप्नोति स्म सा ।

तदनन्तरदिने जन्मदिनोत्सवावसरे बहु-विधानि उपायनानि तया प्राप्तानि । तेषु तस्यै विशेषतः अरोचत भ्रात्रा आनीता काचित् पाञ्चालिका ।

सा पाञ्चालिका स्वर्णकेशैः हरितवेषेण च युक्ता आसीत् । तां मीना यथा उपरि अधः च कम्पयति तथा सा पक्ष्मचालनेन नेत्रोन्मीलनं करोति स्म । अन्यक्रीडनकेभ्यः भिन्ना सा पाञ्चालिका असामान्या एव आसीत् । अतः एव मीना तां सखीभ्यः दर्शयितुम् इष्टवती ।

विद्यालयं प्रति गमनसमये सा तां पुस्तक-स्यूते स्थापितवती । कक्ष्यायाम् अध्यापकेन यत् पाठितं तत्र तस्याः अवधानं न आसीत् एव । स्यूते स्थितायां पाञ्चालिकायाम् एव तस्याः मनः निहितम् आसीत् । सा पाठम् अशृण्वती दिवास्वप्नं पश्यन्ती अस्ति इति इतिहासशिक्षकेण लक्षितम् । अतः सः तां तर्जितवान् । तर्जनेन खिन्ना सा मौनेन पाञ्चालिकां स्पृष्टवती । तदवसरे कस्यचित् पिञ्जस्य स्पर्शः अनुभूतः इव ।



तावता घण्टानादः जातः अवधि-परिवर्तनाय । अग्रिमे अवधौ अन्या शिक्षिका आगता । सा कतिपयानि चित्राणि उपयुज्य भूकम्पविषये पाठनम् आरब्धवती । किन्तु मीनायाः मनः तु पाञ्चालिकायाम् एव आसीत् । अतः

सा मध्ये मध्ये तां पश्यति स्म । उत्साहवती क्रियाशीला च मीना अद्य कमपि प्रश्नम् अकृत्वा कथं तूष्णीम् उपविष्टा अस्ति इति आश्चर्यं प्राप्तवती शिक्षिका ।



तृतीयावधेः आरम्भे मन्दं मन्दं भित्तीनां कम्पनम् आरब्धम् । प्रथमं तत् केनापि न लक्षितम् । तदनन्तरं समग्रस्य भवनस्य कम्पनेन भित्तिः पतिता । छात्राः बहिर्गन्तुम् न शक्ताः ।

भीता मीना पाञ्चालिकाम् अत्यन्तं निकटं स्व्यकरोत् । ततः पाञ्चालिकामुखात् उच्चः ध्वनिः आरब्धः - ''भूकम्पः यदि भवेत् तर्हि सर्वेऽपि भवनतः निर्गन्तुं प्रयत्नं कुर्युः । यदि तत् न शक्येत तर्हि उत्पीठिकायाः अधः स्थातव्यं हस्तौ शिरसि स्थापयित्वा'' इति । अनुक्षणं मीना अवगतवती यत् पाठावसरे अध्यापिकायाः ध्वनिः यः मुद्रितः सः एव पुनः श्रूयमाणः अस्ति इति । मीना पुनः पिञ्जस्य नोदनं कृत्वा उच्चैः आक्रोशत् - ''भूकम्पः ! अहो, भूकम्पः !!'' इति ।

एषः उच्चः ध्वनिः बहिः जनैः रक्षणकार्यसेनया च श्रुतः अभवत् । तेन अवशेषाणाम् अधः छात्राः सन्ति इति ज्ञात्वा ते त्वरिततया तत्र उपस्थाय छात्राणां मीनायाः च रक्षणम् अकुर्वन् ।

''अस्माकं जीवनं रक्षितं भवत्या'' इति वदन्तः सर्वे छात्राः मीनायै धन्यवादान् अर्पितवन्तः । तदा मीना अवदत् - ''एतत् सर्वं पाञ्चालिकाकार्यम् अस्ति । तस्यै एव कृतज्ञतासमर्पणं भवतु'' इति ।

मीनायाः अग्रजः ताम् अभिनन्द्य अवदत् - ''भवती पाञ्चालिकापिञ्जस्य नोदनं यदि कृतवती न स्यात् तर्हि सा 'भूकम्पः' इति उच्चैः न अवदिष्यत् । भवताम् अस्तित्वस्य अभिज्ञानम् एव न अभविष्यत्'' इति ।

सर्वेषां प्राणरक्षणकरणे समर्थम् उपायनं दत्तवते अग्रजाय मीना पुनः धन्यवादान् समर्पितवती । तस्याः अग्रजः प्रतिज्ञातवान् यत् भवत्या सुष्ठु अध्ययनं यदि करिष्यते तर्हि अग्रिमे जन्मदिने अहं सङ्गणकम् एकम् उपहाररूपेण प्रदास्यामि इति ।

एतत् श्रुत्वा मीना आनन्देन अनृत्यत् ।

- यशश्श्रीः एस् पाटिल
शीलादेवीशिन्दे सरकारप्रौढशाला,
कोल्हापुरम् (महाराष्ट्रम्)

# वेणुवादनस्य चमत्कारः

नूतुङ्गविद्यालयस्य प्राचार्यः स्वप्रकोष्ठे उपविश्य सकृत् दृष्टिं प्रसारितवान् भित्ति-घटीदिशि । अपराह्णस्य एकवादनम् । भोजन-समयः सः । किन्तु भोजनविरामस्य घण्टानादः तेन न श्रुतः । 'किम् एषः घण्टावादकः स्वकर्तव्यं विस्मृतवान् ?' इति चिन्तयन् सः क्षणं यावत् क्षुब्धः अभवत् ।

अनन्तरक्षणे एव तेन कश्चन मधुरः वेणुनादः श्रुतः । तदनु एव घण्टानादः अपि अभवत् । छात्राः विरामानन्दम् अनुभोक्तुं कक्ष्याभ्यः बहिः आगताः । तेषु केचन छात्राः विद्यालयपरिसरे वृक्षस्य अधः स्थितं नववर्षीयं बालकं परितः स्थितवन्तः ।

सः अस्ति वेणुविक्रेता राधाप्रियः । प्रति-दिनं सः मध्याह्ने तत्र आगच्छति । तस्य वेणु-नादस्य आरम्भेण विद्यालयस्य घण्टानादकः भोजनविरामस्य कालः जातः इति स्मरन् घण्टानादं करोति स्म । घटीदर्शनेन समयज्ञानं परित्यक्तम् आसीत् तेन । राधाप्रियस्य, घण्टा-नादकस्य च एषः सम्बन्धः सामान्यः जातः आसीत् ।

राधाप्रियः स्ववेणुनादेन छात्रेषु बहून् अभि-मानिनः सम्पादितवान् आसीत् । केचन भोजनसमये पाथेयम् अपि तस्मै यच्छन्ति स्म । एतत् शिक्षकाणां प्रीतये न अभवत् । तादृशेषु चतुर्थीकक्ष्यायाः अध्यापकः श्रीमित्रः अपि अन्यतमः । वेणुनादेन राधाप्रियः कोला-




हलं जनयन् छात्राणाम् एकान्तं नाशयति इति विचिन्त्य सः प्राचार्यम् एतं विषयं न्यवेदयत् ।

प्राचार्यः कुपितः सन् राधाप्रियस्य समीपं गत्वा - 'सर्वे अन्तः गच्छन्तु' इति सर्वान् छात्रान् आदिश्य राधाप्रियं सक्रोधम् अवदत् - ''बहिः गच्छ । पुनः न आगच्छ एतस्यां दिशि'' इति ।

राधाप्रियः कतिचन दिनानि विद्यालय-समीपं न आगतवान् वेणुविक्रयणाय । तस्य अनुपस्थित्या घण्टावादकः भोजनविरामस्य घण्टानादे विशेषावधानं न दत्तवान् ।

वेणुनादश्रवणेन कञ्चित् समयं वा ये छात्राः हृष्टाः भवन्ति स्म ते अवसरच्युतितः नितरां खिन्नाः आसन् ।

अथ कदाचित् अतिमधुराः नादतरङ्गाः वेणोः निर्गत्य छात्राणां कर्णं प्राविशन् ।

तत्समये एव भोजनविरामस्य अपि घण्टा नादिता । हृष्टाः छात्राः सवेगं तत्र धावितवन्तः यत्र राधाप्रियः स्थितवान् आसीत् । तस्य वेणुविक्रयणं सम्यक् प्रवृत्तम् । वेणुः कथं वादनीयः इति सः छात्रान् बोधयन् आसीत् ।

श्रीमित्रः तस्य एतत् प्रत्यागमनम् असहमानः प्राचार्यसमीपं गत्वा विषयं सूचितवान् । प्राचार्यः राधाप्रियसमीपम् आगच्छत् । तस्य उपस्थित्या तं परितः विद्यमानः छात्रसमूहः झटिति ततः अदृश्यः अभवत् । तत्रैव स्थितानां केषाञ्चन छात्राणां समक्षे प्राचार्यः राधाप्रियं कपोले प्रहृतवान् । क्षणं यावत् स्तम्भीभूतस्य राधाप्रियस्य नेत्रयोः अश्रुधारा निर्गता । प्राचार्यः कोशात् धनपत्रं स्वीकृत्य तस्मै दातुम् उद्युक्तः अभवत् । तदा राधाप्रियः विनयेन एव एतत् निराकृत्य – ''श्रीमन् ! अस्य एव विद्यालयस्य छात्रः आसम् अहं तृतीयकक्ष्यायाम् । अपघातकारणतः मम मातापितरौ दिवङ्गतौ । तदनन्तरम् अध्ययनम् अनुवर्तयितुम् अहं न शक्तः । निर्गतिकेन मया जीवनाधारं कमपि अलभमानेन वेणुविक्रयणम् आरब्धम् । अहं मम विद्यालयं विस्मर्तुं न शक्नोमि । छात्रस्नेहम् अपि त्यक्तुं न इच्छामि । एतेन एव कारणेन अत्र पुनः आगमनसाहसं कृतं मया । कथम् अहं विद्यालयात् दूरे स्थातुं शक्नुयाम् ? मम आगमनं भवतां क्लेशाय भवति चेत् अहं दूरं गच्छामि'' इति रुदन् अवदत् ।



राधाप्रियस्य कथनस्य श्रवणेन प्राप्तानुकम्पः प्राचार्यः मूकवत् स्थितस्य श्रीमित्रस्य मुखम् अपश्यत् । ततः सः राधाप्रियं सान्त्वयन् – ''राधाप्रिय ! क्षाम्यतु भवान् । भवान् अस्माकं विद्यालये एव अध्ययनस्य अनुवर्तनं कर्तुम् अर्हति । श्वः आगच्छतु । चतुर्थकक्ष्यायां योजयिष्यामि भवन्तम्'' इति अवदत् ।

अनन्तरदिने प्रातः प्रार्थनासमये उपस्थितस्य राधाप्रियस्य कोशे वेणुं दृष्ट्वा प्राचार्यः तम् अवदत् – 'प्रार्थनागीतं वादयतु' इति ।

ततः आरभ्य प्रार्थनारम्भे तस्य वेणुनादश्रवणभाग्यं दैनन्दिनं जातम् ।

– रजतकुमारत्रिपाठी (१४)
बलासोर्‌जिला स्कूल्
बलासोर् (ओरिसा)

महापुरुषाणां जीवनघटना - ११

# आशावादस्य सत्सङ्कल्पस्य च फलम्

द्वितीये क्रिस्तशके रोमराज्यं परमयोग्येन चक्रवर्तिना हार्डियनेन शासितम् आसीत् । अधिकारे तिष्ठन् अपि एकाकितया भ्रमति स्म सः । कदाचित् मध्याह्नकाले युवचक्रवर्ती सः कश्चन ग्रामं गच्छन् परमातपेन स्विन्नं बीजानि वपन्तं कश्चित् वृद्धम् अपश्यत् ।



अश्वारोही सः क्षणं यावत् स्थित्वा - ''भोः, भवतः वयः किम् ?'' इति पृष्टवान् ।

''स्पष्टं न जानामि । प्रायः शतं वर्षाणि स्युः मम'' इति अवदत् सः ग्रामीणवृद्धः ।

उपस्थितः चक्रवर्ती इति ज्ञात्वा सः विनयेन तम् अनमत् ।

''भवतः विषये दया उत्पद्यते मयि । यौवने भवान् अपेक्षित-प्रमाणेन परिश्रमं न अकरोत् किम् ? तस्य परिश्रमस्य फलम् एतस्मिन् वयसि किं न प्राप्यते ?'' इति पृष्टवान् चक्रवर्ती ।

''यावान् परिश्रमः करणीयः आसीत् तावान् तु कृतः एव तस्याम् अवस्थायाम् । भूमौ विश्वस्य जीवतः मम आशा अस्ति यत् एषा भूमिः अवश्यम् अग्रे प्रतिफलं दास्यति मम कृते भगवत्पादाश्रयणात् पूर्वम् इति'' इति अवदत् वृद्धः ।

''किन्तु शततमे वर्षे तिष्ठन् भवान् इदानीं किमर्थं बीजावपने मग्नः ? एतानि बीजानि सस्यत्वं प्राप्य वृक्षाः सन्तः

मधुरफलदानेन यावत् भवन्तं तोषयेयुः तावत् स्वस्य मरणं न भविष्यति इति किं चिन्तयति भवान् ?'' इति पृष्टवान् चक्रवर्ती ।

''प्रभो ! यौवने क्रीता एषा भूमिः अद्य यावत् बहूनि फलानि दत्तवती अस्ति । फलं दत्तवत्सु वृक्षेषु एकोऽपि वृक्षः मया वर्धितः न । मम अनन्तरं ये आगमिष्यन्ति ते एतस्य फलम् अनुभवन्तु इति उद्देशेन बीजावपनाय अहम् उद्युक्तः अस्मि । फलानां प्राप्तौ लोभः नास्ति मम । कर्तव्यबुद्ध्या अहम् एतान् वर्धयामि । भाग्यवशात् एतेषु केचन वृक्षाः फलिताः भूत्वा मम मरणात् पूर्वम् एव फलानि दद्युः तर्हि तानि चक्रवर्तिने भवते अर्पयेयम्'' इति अवदत् वृद्धः ।

चक्रवर्ती समन्दहासं - ''भवतः शुभम् आशासे मित्र !'' इति उक्त्वा अग्रे अगच्छत् ।

कतिपयवर्षाणाम् अनन्तरं कदाचित् चक्रवर्ती प्रासादस्य छदौ इतस्ततः भ्रमन् आसीत् । तदा तेन कश्चन वृद्धः अवलोकितः, यः स्यूतं गृहीत्वा आगतः आसीत् । द्वारपालकैः सः अवरुद्धः आसीत् । क्षणं यावत् वृद्धं परिशील्य 'तम् अन्तः आनयन्तु' इति भटान् आज्ञापयत् चक्रवर्ती ।

प्रासादस्य उपरिष्टात् तस्य वृद्धस्य स्वागताय सः अधः आगच्छत् । पूर्वं चक्रवर्तिनः समक्षम् उप्तेभ्यः बीजेभ्यः जातानां वृक्षाणां द्वारा प्राप्तं प्रथमं फलोदयं दातुम् आगतः आसीत् सः वृद्धः । चक्रवर्ती तं महता प्रेम्णा आलिङ्ग्य तेन आनीतानि फलानि स्वीकृत्य प्रतिफलरूपेण स्यूतमितानि सुवर्णनाणकानि तस्मै दत्तवान् । आशावादस्य उत्तमसङ्कल्पस्य च फलं कीदृशं भवति इति सः सभासदः उक्तवान् ।

## चन्दमामाप्रश्नावली - ८ (सप्टम्बर् - २००६)

**संस्कृतचन्दामामावाचकेषु केनापि समुचितम् उत्तरं न प्रेषितम् इत्यतः वयं कस्मैचिदपि पारितोषिकं यच्छन्तः न स्मः । वाचकानां ज्ञानाय अष्टम्याः प्रश्नावल्याः उत्तरम् अधः प्रकाशयन्तः स्मः । सर्वे वाचकाः एतस्यां प्रश्नावलीस्पर्धायां सोत्साहं भागं वहेयुः इति अस्माकम् अभ्यर्थना ।**

### अष्टम्याः चन्दमामाप्रश्नावल्याः उत्तराणि

१. 'स्वीयैः एव कुक्कुरैः मारितः स्वामी' इत्येषा कथा ग्रीकदेशीया । मानवस्य नाम अक्टेयनः इति । देवतायाः नाम डयाना इति ।

२. १६० कोटिमिता ।

३. कमला इति । 'कासावरासिनी पिशाची' इत्येतस्याम् ।

४. फाहियानः ।

५. मणिपुरम् इति ।

६. 'मान्त्रिकस्य जीवनम्' इत्येतस्याम् ।

७. यथायोग्यम् उत्तरं दत्तवान् ... (सन्थालीकथा)

# चन्दमामाप्रश्नावली - १०

Co-sponsored by
Infosys FOUNDATION,
Bangalore

यः समुचितम् उत्तरं दास्यति सः अर्हति रू.२५०/- पारितोषिकत्वेन*

अत्र ये प्रश्नाः भवन्ति तेषाम् उत्तराणि गत-वर्षस्य (२००५) द्वादशसु सञ्चिकासु शीर्षकेषु कथासु वा सन्ति । यत् पठितं तस्य स्मरणतः उत्तरम् अविलम्बेन प्राप्यते । यदि न स्मर्येत तर्हि गतस्य वर्षस्य द्वादश अङ्कान् पुरतः संस्थाप्य पृष्ठेषु परिशील्य उत्तरं प्राप्यतां लीलया । आम्, लीलाविषयः एव अस्ति अयम् ।

** एकाधिकजनाः यदि समुचितम् उत्तर प्रेषयेयुः तर्हि तेषु पञ्च जनान् यादृच्छिकतया चित्वा तेषु पारितोषिकधनं वितीर्यते ।*

एवं क्रियतां भवद्भिः - १. उत्तराणि लेखनीयानि । २. नाम, वयः, (ऊनषोडशवर्षीयाः एव अत्र भागं वोढुम् अर्हाः) सङ्केतः (पिन्कोड्सहितः) च प्रेषणीयम् । ३. एकस्य कुटुम्बस्य एकः एव सदस्यः अत्र भागं वोढुम् अर्हः । ४. ग्राहकता अस्ति चेत् ग्राहकसङ्ख्या लिख्यताम् । ५. पिहितपत्रस्य उपरि चन्दमामाप्रश्नावली - १० इति लेखनीयम् । ६. नवम्बर्समाप्तितः पूर्वम् उत्तराणि अस्माभिः प्राप्तव्यानि । ७. जनवरीमासे परिणामः प्रकाशयिष्यते ।

१. गिन्नीसजनानां समक्षे दन्तशलाकायां २८ वलययुतां शृङ्खलां रचितवतः निपुणस्य नाम किम् ? सः कस्य राज्यस्य अभिजनः ?
२. राजकुमार्याः शरीरस्य स्थूलतां न्यूनीकर्तुं वैद्येन काचित् चिकित्सा कृता, या चिकित्सा एव न । तेन किं कृतम् ? एतत् कस्यां कथायाम् अस्ति ?
३. अस्माकं देशं प्रति लघुचित्रकलाम् आनीतवतोः कलाकारयोः नाम किम् ?
४. अन्ताराष्ट्रियं वृद्धदिनं कदा आचर्यते ?
५. बौद्धमतस्य अनुयायिनी प्रथमा महिला का ?
६. 'मिजोराम्' इत्यस्य शब्दस्य अर्थः कः ?
७. कथक्कली कस्य प्राचीननृत्यप्रकारस्य परिष्कृतं रूपम् ?
८. ''बाह्यसौन्दर्यदर्शनमात्रेण यत् निर्णीतं तत् अनुचितम् इति राजा अवगतवान् । कृतम् एव दोषं कर्तुं न इच्छति स्म सः । अतः एव सः सुन्दरीं तिरस्कृतवान् ।'' अत्र उल्लिखितस्य राज्ञः नाम किम् ? कस्यां कथायाम् अस्ति एषा घटना ?





# नवकोटिनारायणः

पूर्वं काशीराज्यं ब्रह्मदत्तः नाम राजा पालयति स्म । तस्मिन् काले तत्र महाधनिकः कश्चन निवसति स्म । नवकोटिं रूप्यकाणि यदा सम्पादितानि तदा एव कश्चन पुत्रः प्राप्तः तेन । अतः धनिकः स्वपुत्रस्य नाम निश्चितवान् यत् 'नवकोटिनारायणः' इति ।

धनिकः पुत्रस्य सर्वाः अपि इच्छाः अवश्यं पूरयति स्म । एतस्य परिणामतः नारायणः उद्धतः दुष्टस्वभावयुक्तः च जातः ।

यदा सः प्राप्तवयस्कः जातः तदा पित्रा तदीयः विवाहः अपि निर्वर्तितः । ततः स्वल्पे एव काले धनिकः मरणं प्राप्तवान् ।

आ बाल्यात् एव नारायणः धनव्यवहारविषये निग्रहवान् न आसीत् । अतः अल्पे एव काले पित्रार्जिता तदीया समग्रा सम्पत्तिः विलुप्ता जाता । तथापि तेन अपव्ययस्य निवारणं न चिन्तितम् । अतः अल्पे एव काले महान् ऋणभारः अपि तस्य उपरि आपतितः । ऋणदातारः ऋणप्रत्यर्पणविषये पौनःपुन्येन अनुरोधम् आरब्धवन्तः । ऋणप्रत्यर्पणाय कोऽपि मार्गः न दृष्टः अकिञ्चनेन नारायणेन ।

बहुधा विचिन्त्य सः ऋणदातॄन् अवदत् - ''महाशयाः ! अहं गङ्गातीरे स्थितस्य वटवृक्षस्य समीपं गच्छन् अस्मि । पूर्वजैः निखातः निधिः अस्ति तत्र । अतः भवन्तः सर्वे ऋणव्यवहारसम्बद्धानि सर्वाणि पत्राणि स्वीकृत्य तत्र आगच्छन्तु'' इति ।

धनं प्राप्येत इति चिन्तयन्तः ते ऋणपत्रैः सह गङ्गातीरं प्राप्तवन्तः । नारायणः निधेः अन्वेषणस्य अभिनयं कृतवान् । मध्यरात्रपर्यन्तं तेन अन्वेषणं कृतम् । अन्ते सः 'जय परमेश्वर !' इति उच्चैः उक्त्वा गङ्गानद्यां कूर्दितवान् ।

तेषु दिनेषु बोधिसत्त्वः गङ्गातीरे स्थिते



आम्रोद्याने हरिणरूपेण वसति स्म । तस्य वैशिष्ट्यं नाम तदीयं शरीरं सुवर्णकान्तियुक्तम् आसीत् । रक्तवर्णीयाः खुराः, रजतमये शृङ्गे, वज्रमणी इव शोभमाने नेत्रतारके च आसन् तस्य । नद्याः मध्यप्रदेशे तेन मानवस्य कस्यचित् क्रन्दनं श्रुतम् । सः ध्वनिम् अनुसरन् नदीतीरं गतवान् । ततः नदीम् अवतीर्य तरन् नारायणसमीपं गत्वा – ''अयि वत्स ! अलं भीत्या । मम पृष्ठस्य उपरि उपविशतु तावत्'' इति वदन् सः नारायणं पृष्ठे आरोप्य स्वनिवासं प्रति अनयत् । ततः अरण्यतः फलानि आनीय तस्मै समार्पयत् सः ।

यदा नारायणः स्वस्थः जातः तदा हरिणः अवदत् – ''वत्स ! अहं भवन्तम् एतस्मात् अरण्यात् नीत्वा भवद्राज्यप्राप्त्यर्थं मार्गं दर्शयिष्यामि । स्वगृहं गत्वा सुखेन जीवतु भवान् । किन्तु अहम् अत्र अस्मि इति कोऽपि न जानीयात् । राजा अन्यः कोऽपि वा सानुरोधं पृच्छति चेदपि, महान्तं लोभं दर्शयति चेदपि भवता तु मद्वासरहस्यं कथमपि न प्रकाशनीयम्'' इति ।

नारायणः एतत् अङ्गीकृतवान् । ततः हरिणः तं पृष्ठे उपवेश्य काशीगमनमार्गे अत्यजत् ।

यस्मिन् दिने तेन काशी प्राप्ता तस्मिन् दिने तत्र काचित् अपूर्वा घटना घटिता । राज्ञी स्वप्ने कञ्चित् सुवर्णहरिणम् अपश्यत् । सः हरिणः स्वप्ने तां धर्मम् उपादिशत् अपि ।

राज्ञी राजानम् एतं वृत्तान्तं श्रावयित्वा – ''तादृशः हरिणः लोके कुत्रापि स्यात् एव ।

तस्य दर्शनं प्राप्तं चेदेव मम प्राणाः रक्षिताः भवेयुः, न अन्यथा । अतः भवान् तस्य अन्वेषणं कारयतु'' इति अवदत् ।

राज्ञ्याः एतस्याः अपेक्षायाः पूरणाय राज्ञा कश्चन उपायः चिन्तितः । गजस्य उपरि स्थापिते वरण्डके सः सहस्रसुवर्णनाणकात्मकं ग्रन्थिं स्थापितवान् । ततः राजधान्यां सर्वत्र तस्य गजस्य यात्रा कारिता । सः अघोषयत् यत् यः सुवर्णहरिणवार्ताम् आनेष्यति तस्मै एतानि सुवर्णनाणकानि मया उपायनीकरिष्यन्ते इति ।

एतां वार्तां नारायणः अशृणोत् । दुराशा-ग्रस्तः सः झटिति एव सेनापतिसमीपं गत्वा - ''महाशय ! अहं सुवर्णहरिणवार्तां जानामि । अतः भवन्तः मां कृपया राजसमीपं नयन्तु'' इति अवदत् ।

सेनापतिना सः झटिति एव राजसमीपं नीतः । नारायणः राजानं सुवर्णहरिणदर्शनं निवेदितवान् ।

एतस्मात् सन्तुष्टः राजा तस्मिन् एव क्षणे तेन सह प्रस्थितवान् । नारायणः सपरिवारं राजानं हरिणवसतिसमीपं नीतवान् । सः तु ततः दूरे अतिष्ठत् ।

राजपरिवारस्य उपस्थितितः तस्मिन् परि-सरे महान् कोलाहलः उत्पन्नः । हरिणः एतम् अशृणोत् ।

'प्रायः कोऽपि विशिष्टः अतिथिः उप-स्थितः स्यात् । तस्य स्वागतं करणीयं मया' इति विचिन्त्य सः हरिणः गुहाद्वारसमीपम् आगत्य सर्वम् अपश्यत् ।

राज्ञः उपस्थितिं ज्ञात्वा सः किञ्चिदिव आश्चर्यचकितः । 'राजा एव मया द्रष्टव्यः'



इति विचिन्त्य सः वेगेन ततः अधावत् ।

तस्य वेगं दृष्ट्वा सर्वे आश्चर्यचकिताः । राजा अपि आश्चर्यम् अनुभवन् धनुः बाणं च हस्तेन गृहीतवान् ।

तावता तस्य समीपम् आगतः हरिणः मानवभाषया अपृच्छत् - ''महाराज ! अलं बाणप्रयोगेण । मम वसतिस्थानं भवन्तं कः अवदत् ?'' इति ।

श्रवणरमणीयस्य तस्य ध्वनेः श्रवणात् राजा आनन्दं प्राप्तवान् । धनुः बाणः च तस्य हस्तात् स्वयम् अपतत् ।

हरिणरूपी बोधिसत्त्वः पुनः अपि राजानम् अपृच्छत् - ''महाराज ! मम वसतिस्थानम् अत्र अस्ति इति कः भवन्तम् अवदत् ?'' इति ।

राजा हस्तसङ्केतेन दूरे स्थितं नारायणम् अदर्शयत् ।

तदा बोधिसत्त्वः - ''शास्त्रेषु उच्यते यत् मानवात् अपि क्रूरतरः प्राणी लोके नास्ति इति । महाकृतघ्नः सः । पशूनां पक्षिणां च आन्तर्यं कथमपि ज्ञायेत । किन्तु मानवस्य आन्तर्यस्य अवगमनं सर्वथा असम्भवम्'' इति वदन् आत्मना कृतं नारायणस्य रक्षणं, कोऽपि न वक्तव्यः इति यत् ज्ञापितं तत्, नारायणस्य कृतघ्नव्यवहारं च विस्तरेण अश्रावयत् ।

एतत् श्रुत्वा नितरां क्रुद्धः राजा - ''यद्येवं तर्हि नारायणस्य वधः कार्यते मया । तादृशाः कृतघ्नाः एतस्यां भूमौ स्थातुम् अनर्हाः'' इति अवदत् ।

तदा बोधिसत्त्वः तं निवारयन् - ''महाराज ! एतस्य प्राणापहरणं न उचितम् । यद्येषः सजीवं तिष्ठेत् तर्हि कदाचित् वा विवेकं प्राप्य स्वस्य जीवनस्य परिष्कारं कुर्यात् अपि । अतः एतस्य वधः मास्तु । यः पुरस्कारः घोषितः तं दत्त्वा प्रेषयतु एतम् । एतत् एव न्याय्यम्'' इति अवदत् ।

राजा एतत् अङ्गीकुर्वन् नारायणाय पारितोषिकं दत्तवान् । बोधिसत्त्वस्य उदारता, सहना इत्यादयः गुणाः तेन अवगताः । अतः सः बोधिसत्त्वं महात्मानं भावयन् तं मार्गदर्शकपदे नियुक्तवान् ।





# रामायणम्

तस्याम् अपि रात्रौ भारद्वाजः बह्वीः कथाः अश्रावयत् । ताः कथाः श्रुत्वा ते त्रयः अपि निश्चिन्ततया सुप्तवन्तः ।

अनन्तरदिने प्रातः भारद्वाजः तैः त्रिभिः सह किञ्चिद्दूरं गत्वा ततः शुभप्रयाणम् आशंसितवान् । चित्रकूटं प्रति गमनस्य मार्गं बहुविधैः चिह्नैः सूचितवान् सः ।

सीता रामः लक्ष्मणः च भारद्वाजस्य सूचनानुसारं चलन्तः तत् स्थानं प्राप्तवन्तः यत्र युमानानदीतरणाय कश्चन घट्टः आसीत् । तत्र लक्ष्मणः कश्चन प्लवं निर्माय तस्मिन् सीतायाः उपवेशनाय वेणुदण्डैः लताभिः च समुचितम् आसनं कल्पितवान् । ते तस्मिन् प्लवे वस्तूनि स्थापयित्वा नद्याः अपरं तीरं प्राप्तवन्तः ।

यमुनायाः मध्यभागं गता सीता यमुनां तथैव श्रद्धया नमस्कृतवती, यथा गङ्गायाः नमस्कारः कृतः आसीत् । गोदानं करिष्यामि इति सङ्कल्पः अपि कृतः तया ।

वसन्तर्तोः उपस्थित्या वनस्य सौन्दर्यं विशेषतः शोभते स्म । वृक्षेषु विविधानि वर्णमयानि पुष्पाणि विराजन्ते स्म । एतत् अपूर्वं निसर्गसौन्दर्यं दृष्टवती सीता अत्यन्तं हृष्टा अभवत् ।

लक्ष्मणः अग्रे अग्रे गच्छति स्म । सीता यत् फलं पुष्पं वा इच्छति स्म, सत्वरम् एव सः तत् अवचित्य यच्छति स्म तस्यै । सस्यानां विषये प्रश्ने कृते विना खेदम् उत्तरं दीयते स्म तेन ।

नदीपरिसरे गच्छन्तः ते फलमूलादिसेवनेन बुभुक्षां निवार्य किञ्चित् विश्रम्य समतलस्थाने प्रस्थितवन्तः ।



चित्रकूटं प्राप्य रामः लक्ष्मणं सूचितवान् यत् प्रशस्ते कस्मिंश्चित् स्थाने पर्णशाला निर्मीयताम् इति । लक्ष्मणः वृक्षान् छित्त्वा पर्णकुटीरस्य निर्माणाय योग्यान् दारुखण्डान् आनीतवान् । तदनन्तरम् उभावपि पर्णशालां निर्माय तस्याः अन्तः अपेक्षितेन क्रमेण विभागं कल्पितवन्तौ । शास्त्रोक्तया रीत्या तैः कुटीरस्य प्रवेशः कृतः ।

ततः समीपे एव प्रवहन्त्यां माल्यवतीनद्यां स्नानं कुर्वन्तः सुन्दरे वने भ्रमन्तः च ते नगर-जीवनं विस्मृत्य आनन्देन समयं यापितवन्तः ।

शृङ्गवेरपुरे गुहः सुमन्त्रः च यावत् सीता, रामः, लक्ष्मणः च दृष्टिपथात् न अपक्रान्ताः तावत् गङ्गायां न्यस्तदृष्टी आस्ताम् । तदनन्तरं सुमन्त्रः गुहस्य गृहं गतवान् । रामः कदाचित् स्वनिर्णयं परिवर्त्य अयोध्यां प्रति प्रत्यागमनाय निश्चयं कुर्यादिति प्रतीक्षमाणः सः गुहस्य गृहे एव कानिचन दिनानि अवसत् । यदा तस्य प्रतीक्षा व्यर्था जाता तदा अनन्य-गतिकतया सः अयोध्यादिशि प्रस्थितवान् । अयोध्यातः रामस्य निर्गमनस्य पञ्चानां दिनानाम् अनन्तरं सः तत्र गतवान् । अयोध्यां प्रतिगच्छन्तं रथं रिक्तं दृष्ट्वा बहवः विविधैः प्रकारैः सम्भाषणम् अकुर्वन् ।

सुमन्त्रः साक्षात् कौसल्यागृहं गत्वा रामेण यत् उक्तम् आसीत् तत् सर्वं सिंहसनारूढं दशरथं श्रावितवान् । एतस्य श्रवणात् दशरथः निःसंज्ञः अभवत् ।

कौसल्या सुमन्त्रः च पतितं दशरथम् उत्थापितवन्तौ । "महाराज ! रामं वनं प्रापय्य आगतवन्तम् एतं भवान् किमर्थं किमपि न वदति ? यदि किमपि उच्येत तर्हि कैकेयी अन्यथा चिन्तयेत् इति किं भीतिः भवतः ? अलं भीत्या । सा तु अत्र नास्ति इदानीम्" इति उक्त्वा कौसल्या रुदितवती । एतस्य दर्शनात् दशरथः अन्तःपुरस्त्रियः च रोदनम् आरब्धवन्तः ।

"मम आज्ञायाः महत्त्वम् इदानीं कियत् अस्ति इति न अहं जानामि । भवद्भिः रामः पुनः अत्रैव आनीयताम् । तत् न शक्यं चेत् मां वा तत्र प्रेषयन्तु" इति अवदत् दशरथः ।

कौसल्या अपि सुमन्त्रम् असूचयत् - 'रामसमीपं मां नयतु' इति ।

तदा सुमन्त्रः तस्यां धैर्यं पूरयन् - "ते अरण्ये आनन्देन समयं यापयन्तः सन्ति । सीतायाः तु तत् वनम् इति भासते एव । प्रायः रामस्य अनुपस्थित्या अयोध्या एव

अरण्यायमाना अस्ति'' इति अवदत् ।

अनन्तरदिने कौसल्या दशरथं घटितं सर्वं वदन्ती स्वीयां व्यथां किञ्चित् न्यूनीकर्तुं प्रयासं कृतवती ।

तदा राजा दशरथः अञ्जलिबद्धः सन् तां न्यवेदयत् - ''कृपया गतं सर्वं स्मारयन्ती मम हृदयं दुःखाग्निना मा ज्वालयतु भवती'' इति । एतादृशस्य हृदयविदारकस्य वचनस्य श्रवणात् पुत्रशोकेन ज्वलन्ती कैकेयी महान्तं पश्चात्तापम् अनुभूतवती ।

अयोध्यायाः रामस्य निर्गमनस्य अनन्तरं षष्ठे दिने दशरथस्य मरणम् आसन्नम् इव । तदा सः 'भवान् अपि पुत्रशोकेन मरिष्यति' इति यः मुनिशापः आसीत् तम् अस्मरत् । तां घटनां सः कौसल्याम् अश्रावयत् ।

''तेषु दिनेषु अहं युवावस्थायाम् आसम् । शब्दवेधनिपुणः अहं शब्दम् अनुसृत्य बाण-प्रयोगं करोमि स्म । एतत् मम कौशलं सर्वेषां प्रशंसापात्रम् आसीत् । अहं तादृशे स्थाने मृगयां करोमि स्म यत्र बहुविधाः पशवः जल-पानाय आगच्छेयुः । समीपस्थेषु गुल्मेषु निलीय स्थित्वा जलपानशब्दं श्रुत्वा बाणं प्रयुज्य जन्तून् मारयामि स्म अहम् ।

कदाचित् वर्षर्तौ रात्रिवेलायां गाढे अन्ध-कारे गुल्मेषु निलीय जन्तूनाम् आगमनं प्रतीक्षमाणः आसम् । तदा नदीतीरे 'बुडबुड' ध्वनिः उत्पन्नः । तं ध्वनिं श्रुत्वा अहम् अचिन्तयं यत् कश्चन गजः जलं पिबन् स्यात् इति । अतः एव अहं शब्दं लक्ष्यीकृत्य बाणं प्रयुक्तवान् । तदनुक्षणमेव कस्यचित् जनस्य आर्तनादः श्रुतः ।



''तपसा एव जीवनं यापयत्सु मादृशेषु बाणप्रयोक्ता कः अस्ति सः ? किम् अपराद्धं मया ? मम हननेन किं लभ्येत ? एकेन बाणप्रयोगेण वस्तुतः त्रयाणां प्राणाः हृताः इव । केन एवं कृतम् ? मम मरणानन्तरं अन्धौ वृद्धौ मम मातापितरौ कियन्तं कालं जीवेताम् ?'' इति करुणापूर्णं विलपनम् अपि श्रुतं मया ।

अहं तत्र गत्वा जीवनमरणयोः मध्ये सङ्घर्षं कुर्वन्तं मुनिकुमारं कञ्चित् अपश्यम् । तेन जलपूरणाय यत् पात्रं नीतम् आसीत् तत् पार्श्वे एव पतितम् आसीत् ।

हतप्रभः इव स्तम्भीभूय स्थितवन्तं मां सः मुनिकुमारः अवदत् - ''भवता एतत् अकार्यं किमर्थं कृतम् ? गत्वा मम मातापितरौ सूचयतु 'अहम् अत्र अस्मि' इति । अन्यथा



मम स्थितिः कुत्र इति तौ न जानीयाताम् । ज्ञातवन्तौ चेदपि अत्र आगन्तुं न शक्नुयाताम् । तयोः पिपासा निवारणीया इति धिया जलं नेतुम् अत्र आगत्य अहं भवतः बाणेन हतः अभवम् । एषा बाधा सोढुं न शक्या मया । अतः गमनात् पूर्वं बाणम् एतं शरीरात् निष्कासयतु कृपया'' इति ।

'बाणनिष्कासनेन वराकोऽयं मुनिकुमारः कदाचित् म्रियेत' इति चिन्तयन् किङ्कर्तव्यतामूढः अहं तत्रैव स्थितवान् आसम् । किन्तु मुनिकुमारस्य अनुरोधं निराकर्तुम् अशक्नुवता मया बाणनिष्कासने मतिः कृता ।

बाणः यदा शरीरात् निष्कासितः तदनु एव सः मुनिकुमारः मृतः अभवत् ।

अहं जलेन पात्रं पूरयित्वा मुनिकुमारस्य मातापित्रोः निकटं गतवान् । मम पदनिक्षेपध्वनेः श्रवणेन पुत्रः एव आगच्छन् अस्ति इति भावं प्राप्तवन्तौ तौ । ''पुत्र ! जलम् आनेतुं गतवतः भवतः एतावान् विलम्बः किमर्थम् ? अविलम्बेन जलं दीयताम्'' इति अवदत् पिता ।

''अहं भवतोः पुत्रः नास्मि । दशरथः नाम राजा अस्मि'' इति वदता, सङ्कोचेन एव स्वेन कृतस्य दुष्कृत्यस्य विवरणं कृतं मया । एतत् श्रुतवतोः तयोः दुःखस्य कापि सीमा न आसीत् । मया हस्तालम्बनेन तौ पुत्रस्य शवस्य समीपं नीतौ । शवस्य उपरि पतित्वा तौ बहुधा विलपितवन्तौ । ततः वृद्धः मुनिः माम् उद्दिश्य – ''आवयोः एकमात्रस्य पुत्रस्य हननं कृतवता भवता कारणं विना एव आवां

दुःखसागरे पातितौ । अग्रे पुत्रशोकेन एव भवतः अपि मरणं भविष्यति'' इति शापं दत्तवान् ।

तौ वृद्धौ दम्पती पुत्रचिन्तया एव मरणं प्राप्तवन्तौ''

एवं कौसल्यया सह सम्भाषणं कुर्वतः दशरथस्य दृष्टिः मन्दा जाता । क्रमशः तदीया श्रवणशक्तिः अपि क्षीणा अभवत् ।

रामस्य नाम पौनःपुन्येन स्मरन् - 'हा राम !' इति चीत्कुर्वन्, कैकेयीं च शपन् अर्धरात्रे प्राणैः वियुक्तः अभवत् दशरथः ।

तावता रामस्य निर्गमनस्य अनन्तरं षष्ठं दिनम् अतीतम् आसीत् । तस्मिन् समये अन्तःपुरस्थाः सर्वाः अपि स्त्रियः कौसल्या सुमित्रा चापि सुप्ताः आसन् । समग्रम् अयोध्यानगरं निद्रामग्नम् आसीत् ।

अनन्तरदिनस्य प्रातःकाले अन्तःपुरस्य स्त्रियः महाराजस्य दशरथस्य मरणवार्तां ज्ञातवत्यः । यदा अन्तःपुरस्थाः दुःखेन रोदनम् आरब्धवत्यः तदा अन्ये अपि एताम् अशुभवार्तां ज्ञातवन्तः । क्रमशः नगरे सर्वत्र वार्ताप्रसारः अभवत् ।

वसिष्ठादयः अविलम्बेन एव तत्र उपस्थिताः । दशरथस्य अन्त्यक्रियाविधिं कर्तुं तस्य पुत्रेषु कोऽपि न आसीत् तत्र । रामलक्ष्मणौ तु अरण्ये आस्ताम् । भरतः शत्रुघ्नः च केकयराजगृहे आस्ताम् । अतः दशरथस्य शरीरं रासायनिकलेपनेन सुरक्षितं स्थापितम् ।

सिद्धार्थं, विजयं, जयन्तम्, अशोकं, नन्दनं च आकार्य वसिष्ठः अवदत् - ''भवद्भिः



अश्वम् आरुह्य यावच्छीघ्रं केकयराजस्य नगरं गत्वा भरतः वक्तव्यः यत् अविलम्बेन आगन्तव्यम् इति अहं सूचितवान् अस्मि इति । वनं प्रति रामस्य गमनं, दशरथस्य दिवं गतिः वा भवद्भिः न वक्तव्यम्'' इति ।

ततः भरतस्य कृते उत्तमानि आभूषणानि, वस्त्राणि च तेन प्रेषितानि ।

वसिष्ठेन प्रेषिताः ते नदीः पर्वतान् च तीर्त्वा सुदीर्घयात्रानन्तरं भरतस्य मातुलस्य देशं प्राप्तवन्तः । भरतेन मिलित्वा आनीतं भूषणादिकं तस्मै समर्पितम् । यत् वक्तव्यम् इति वसिष्ठेन सूचितं तत् सर्वं तम् उक्त्वा 'अचिरात् एव अयोध्यां प्रति प्रस्थीयताम्' इति अवदन् ते ।

भरतः सर्वेषां ज्येष्ठानाम् अनुज्ञां प्राप्य अयोध्यातः आगतैः सह सेनासहितः सन् प्रस्थितवान् ।

सप्तानां दिनानां यात्रां कृत्वा भरतः शत्रुघ्नः च अयोध्यां प्राप्तवन्तौ । अन्ये तदनन्तरम् आगतवन्तः ।

तस्मिन् दिने भरतेन कश्चन दुःस्वप्नः दृष्टः आसीत् । तस्य दुःस्वप्नस्य दर्शनात् आरभ्य सः चिन्ताग्रस्तः व्याकुलः च आसीत् । अयोध्याप्रवेशानन्तरं सा एव चिन्ता पुनः आरब्धा । नगरे उत्साहः उल्लासो वा न दृश्यते स्म । जनाः सर्वे दुःखिनः इव दृश्यन्ते स्म । नगरे किमपि अनिष्टं घटितम् अस्ति इति तेन ज्ञातम् ।

सः सर्वप्रथमं पितुः प्रासादं प्रविष्टवान् । पिता तत्र न दृष्टः तेन । ततः सः मातुः गृहं गतवान् । पुत्रं दृष्ट्वा माता कैकेयी आसनतः अवतीर्णवती । भरतः तस्याः पादौ स्पृष्टवान् । सा पुत्रम् अङ्के उपवेश्य - ''मातुलगृहतः कदा प्रस्थितं भवता ? तत्र सर्वं कुशलं खलु ?'' इति कुशलप्रश्नान् कृतवती ।

भरतः कैकेय्याः प्रश्नेषु एकस्य अपि उत्तरम् अदत्त्वा - ''अम्ब ! पिता कुत्र ? मया कौसल्यायाः पादाभिवन्दनं करणीयम्'' इति उक्तवान् ।

''भवतः पिता भूतपञ्चके लीनः अभवत् पुत्र !'' इति उक्त्वा कैकेयी दशरथस्य मरण-वार्ताम् अश्रावयत् । एतां श्रुत्वा भरतः निश्चेष्टः अभवत् । कैकेयी तं समाश्वासयितुं प्रयत्नं कृतवती ।





# यमले राजकुमार्यौ

कर्मपुरस्य राजा भाग्यदेवः । तस्य उभे पुत्र्यौ । ते यमले । एका श्वेतवर्णीया । तस्याः नाम श्वेता इति । अपरा कृष्णच्छाया-युक्ता । अतः तस्याः नाम कृष्णा इति । यद्यपि तयोः वर्णभेदः तु आसीत्, किन्तु तयोः औन्नत्य-स्थौल्य-गुणव्यवहारादयः तु समानाः । राज्ञा ते प्रीत्या पालिते ।

एवं दश वर्षाणि अतीतानि । कदाचित् श्वेता कृष्णा च उद्याने विहरन्त्यौ आस्ताम् । तदा कस्माच्चित् वृक्षात् कश्चन नीडः भूमौ पतितः । एतस्मात् भीते राजकुमार्यौ उच्चैः चीत्कारं कृतवत्यौ । तत् श्रुत्वा परिचारिकाः धावन्त्यः आगतवत्यः । ताभिः भूमौ पतितः सः नीडः दृष्टः । तस्य अन्तः अण्डद्वयम् आसीत् । परिचारिकाः तं नीडम् अण्डसहित-तया गुल्मे क्षिप्तवत्यः, राजकुमारीभ्यां सह राजभवनं गतवत्यः च ।

भीतिकारणतः राजकुमार्यौ ज्वरग्रस्ते जाते । विविधाः चिकित्साः कृताः चेदपि तयोः ज्वरः न अपगतः एव ।

अथ कदाचित् रात्रौ राज्ञा कश्चन स्वप्नः दृष्टः । स्वप्ने सः पञ्चवर्णमयीं काञ्चित् पक्षिणीम् अपश्यत् । सा च पक्षिणी मानव-भाषया अवदत् – ''अये राजन् ! अहं देव-पक्षिणी अस्मि । मया भवतः उद्याने नीडं निर्माय अण्डद्वयं प्रसूतम् आसीत् । यदा ततः पक्षिण्योः उत्पत्तिः भविष्यति तदा ते पक्षिण्यौ राजकुमार्योः कृते उपायनीकरणीये इति मम चिन्तनम् आसीत् । किन्तु भवतः मूर्खाः परि-चारिकाः अण्डसहितं नीडं गुल्मे क्षिप्त्वा अविवेकितां प्रदर्शितवत्यः'' इति ।

''अहम् अद्य एव अण्डयोः अन्वेषणाय प्रयासं करिष्यामि'' इति अवदत् राजा ।

''तत् कथं शक्येत इदानीम् ? अण्डयोः भङ्गः यदा जातः तदा ततः पक्षिण्योः उत्पत्तिः जाता । इतः उड्डीय गते ते । इदानीं भवतः

पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा



राज्यस्य पश्चिमदिशि स्थितस्य पर्वतस्य शिखरे ते निवसतः । यदि भवान् स्वयं गत्वा ते पक्षिण्यौ आनीय तयोः कृते स्वादूनि फलानि दद्यात् तर्हि प्रसन्ने ते अण्डद्वयं दद्याताम् । पञ्चवर्षाभ्यन्तरे ते अण्डे रत्नरूपेण परिवृत्ते भविष्यतः । तयोः पक्षिण्योः आगमनात् एव भवतः पुत्र्योः स्वास्थ्यं सम्यक् भवेत्, न अन्यथा'' इति ।

''तस्य पर्वतस्य शिखरं नितरां दुरारोहम् । अद्यावधि कोऽपि तत् आरूढवान् न स्यात्'' इति अवदत् राजा ।

''भवता कथं तस्य आरोहणं क्रियेत इत्ययं विषयः न हि मत्सम्बद्धः । यावत् ते पक्षिण्यौ भवता न आनीयेते तावत् भवतः पुत्र्योः ज्वरः न अपगमिष्यति इति तु निश्चितम् । अन्यः अपि अंशः अवधातव्यः अस्ति अत्र । तयोः अण्डे रत्नरूपेण परिवर्तनं प्राप्स्यतः इति उक्तं खलु मया ? तयोः वर्णः भविष्यति श्वेतः पाटलः च । श्वेतानामिकया भवत्पुत्र्या पाटलं रत्नं स्वीकरणीयम् । कृष्णया च श्वेतं रत्नं प्राप्तव्यम् । ततः एव भवतः पुत्र्योः हितम् । यदि अत्र अन्यथा भवेत् तर्हि महती विपत्तिः सम्भवेत्'' इति ।

ततः राज्ञा जागरणं प्राप्तम् । राजा स्वप्नवृत्तान्तं पत्नीं श्रावितवान् ।

अनन्तरदिने प्रातः सः मन्त्रिणः अपि आहूय स्वप्नवृत्तान्तं श्रावितवान् । किन्तु ते कमपि परिहारोपायं न सूचितवन्तः । अतः राजा भगवतः प्रार्थनाय मन्दिरं गतवान् ।

यावत् राजा प्रार्थनाम् आरब्धवान् तावता मूर्तेः अधोभागतः काचित् गोधा बहिः आगता । भित्तिं सकृत् आरुह्य पुनः अधः आगत्य सा राज्ञः समीपे अतिष्ठत् ।

एतत् दृष्ट्वा पुरोहितः राजानम् अवदत् - ''महाराज ! भगवान् भवति कृपां दर्शितवान् अस्ति । भवतः साहाय्याय एषा गोधा प्रेषिता अस्ति तेन'' इति ।

''एषा मम साहाय्यं कथं कुर्यात् ?'' इति अपृच्छत् राजा ।

''तेनैव साहाय्यप्रकारः अपि दर्शितः । दुर्गभित्तेः आरोहणे गोधा एव नितराम् उपकारिका, न अन्यः । एतस्याः ग्रहणं सुदृढम् । एतस्याः शरीरे रज्जुं बद्ध्वा एतां पर्वतशिखरं प्रति प्रेषयतु । यदा एषा शिखरं प्राप्स्यति तदा रज्जुसाहाय्येन शिखरारोहणं कर्तुं शक्यम्'' इति अवदत् पुरोहितः ।

पुरोहितस्य कथनं युक्तम् अमन्यत राजा ।

ततः शिखरारोहणाय मुहूर्तः निश्चितः । यदि महाराजः पतेत् तर्हि अपायः न भवेत् इति उद्देशेन प्रबलं जालं प्रसारितं पर्वतमूले । गोधायै शक्तियुक्तः आहारः अपि दत्तः । राजा खड्गं गृहीत्वा जलाहारादिकं स्वीकृत्य पर्वतसमीपं गतः । गोधायाः कटौ कृशा दृढा रज्जुः बद्धा । ततः सा गोधा पर्वतशिखरं प्रति प्रेषिता ।

यदा गोधया शिखरं प्राप्तं तदा उभौ सैनिकौ रज्जुं गृहीत्वा बलात् आकृष्य परीक्षितवन्तौ । गोधा तु दृढतया शिलायां संश्लिष्टा इव आसीत् । रज्जुसाहाय्येन आरोहणे अपाय-रहिततां दृढीकृत्य राजा भगवन्नाम स्मरन् रज्जुं गृहीत्वा आरोहणं कृतवान् ।



अधः राज्ञी, अन्ये राजपरिवारीयाः च श्वासं निरुध्य सातङ्कं स्थितवन्तः आसन् । राजा एतस्मिन् प्रयत्ने सफलः भवेत् उत न इति चिन्ता तान् सर्वान् बाधते स्म ।

राजा यावत् शिखरं प्राप्तवान् तावता सूर्यास्तः जातः आसीत् । राजा गोधायाः कटौ बद्धां रज्जुम् अपनीय कस्मिंश्चित् शिला-खण्डे दृढतया बद्धवान् । कौमुदीप्रकाशे राज्ञा कश्चन वृक्षः दृष्टः । वृक्षस्य उपरि उभे पक्षिण्यौ अपि तेन दृष्टे । तस्य वृक्षस्य मध्यभागे कश्चन घोरः सर्पः लम्बमानः दृश्यते स्म । राजदर्शन-समनन्तरम् एव सर्पः फणां प्रसार्य दंशनाय उद्युक्तः । राजा झटिति एव खड्गम् आकृष्य एकेनैव प्रहारेण तं सर्पम् अमारयत् । सर्पस्य शरीरं भूमौ अपतत् ।

राजा वृक्षम् आरुह्य ते पक्षिण्यौ गृहीत्वा अधः आगत्य गोधया सह पर्वतमूलं प्राप्त-वान् । तावता प्रातःकालः जातः आसीत् । यदा पर्वतमूलं प्राप्तं तदा गोधा पक्षवती सती आकाशं प्रति उड्डीय गतवती ।

पक्षिणीभ्यां सह राजा प्रासादं प्राविशत् । तत्समनन्तरम् एव राजकुमार्यौ ज्वरात् मुक्ते जाते । अनन्तरदिने एकैकम् अण्डं प्रसूय ते पक्षिण्यौ अदृश्यतां गते ।

राजा ते अण्डे रजतकण्डोले स्थापयित्वा तं च रजतकण्डोलं दृढायां लोहपेटिकायां स्थापयित्वा कीलितवान् ।

पञ्च वर्षाणि गतानि । श्वेता कृष्णा च पञ्चदशवर्षीये जाते । शुभे दिने राजा पेटिकाम् उद्घाटितवान् । तत्र प्रकाशमानं रत्नद्वयं प्राप्तं तेन । एकं रत्नं श्वेतम्, अपरं च पाटलम् आसीत् ।

यावत् सः पेटिकातः रत्नद्वयं बहिः आनीत-

वान् तावता राजकुमार्यौ तत्र उपस्थिते ।

राजा ते उद्दिश्य अवदत् - ''वत्से ! एतत् उभयम् अपि भवत्योः कृते एव । एतयोः कारणतः भवत्योः उभयोः अपि भाग्यम् उज्ज्वलं भविष्यति । किं रत्नं कया स्वीकरणीयम् इति प्रश्नः उदियात् कदाचित् । अद्य अहं भवत्योः कृते एकं श्वेतं चम्पकं पुष्पाधान्यां स्थापयित्वा ददामि । प्रतिदिनं भवतीभ्यां तत् परिशीलनीयम् । ततः स्वयं ज्ञायते यत् किं रत्नं कया स्वीकरणीयम् इति'' इति ।

तस्मिन् एव दिने सः आस्थानमायापालं रहसि आहूय अवदत् - ''मायापाल ! रत्नद्वयं तु प्राप्तम् अस्ति । इतः परं भवता स्वीयं कार्यं करणीयम्'' इति ।

''महाराज ! यत् मद्द्वारा कारयितुं भवता इष्यते तत् स्वयं कर्तुं शक्नोति एव भवान् । श्वेतायै दीयमानेन श्वेतचम्पकेन युक्ते पुष्पपात्रे किञ्चित् रक्तमषी स्थाप्यतां, पुष्पस्य वृन्तः जलस्पर्शं यथा प्राप्नुयात् तथा क्रियताम् । एतेन अल्पे एव काले पुष्पदलानि पाटलवर्णतां प्राप्नुवन्ति स्वयम् एव । एतत् तन्त्रं भवान् अपि जानाति एव'' इति अवदत् मायापालः ।

''यत् कार्यं येन करणीयं तत् तेन कृतं चेदेव शोभा'' इति अवदत् राजा । ततः उभौ अपि हसितवन्तौ ।

तस्मिन् दिने सायं श्वेतायै कृष्णायै च राज्ञा एकैकं श्वेतचम्पकपुष्पं पुष्पपात्रसहिततया दत्तम् । पात्रयोः उपरि तयोः नाम अङ्कितम् आसीत् । पुष्पसहितं पुष्पपात्रं स्वीकृत्य राजकुमार्यौ प्रकोष्ठं गतवत्यौ ।

उभे अपि तस्मिन् पुष्पे जायमानं परिवर्तनं जागरूकतया निरीक्षमाणे आस्ताम् । कृष्णायाः पुष्पं यथापूर्वं श्वेतम् एव आसीत् । किन्तु श्वेतायाः पुष्पं पाटलवर्णतां प्राप्नोत् ।

एतां वार्तां श्रुत्वा राजा नितरां सन्तुष्टः सन् पुत्र्यौ आहूय अवदत् - ''किं रत्नं कया स्वीकरणीयम् इति एतावता ज्ञातं स्यात् खलु भवतीभ्याम् ?'' इति ।

ततः सः तयोः पुरतः रत्ने अस्थापयत् । श्वेता पाटलं रत्नं स्वीकृतवती । कृष्णा च श्वेतं रत्नम् ।

राजा मायापालाय उत्कृष्टं पारितोषिकं दत्त्वा तं पुरस्कृतवान् ।



चित्रम् - गान्धि अय्यः

# अपराजेयः गरुडः

वज्रपुर्याः प्रधानमन्त्री पुष्पराजः नरेन्द्रदेवेन रवीन्द्रदेवेन च मिलति । सः प्रतिज्ञापूर्वकम् अवदत् यत् सर्वविधं साहाय्यं करिष्यते इति । चन्द्रपुर्यां विक्रमसिंहः महेन्द्रवर्माणं वदति यत् अहं नरेन्द्रदेवविषये अधमर्णः अस्मि इति ।



















पूर्वम् एव नोक्तं भवता किमर्थम् ?
तदा मया न ज्ञातं महाराज ! तद्विषये आदित्यं वदानि किम् ?


मास्तु, इदानीं तस्य मानसं कम्पितं न भवेत् । अङ्गरक्षकान् सूचयतु यत् यदा ते बहिर्गच्छन्ति तदा रात्रि, तदीयेषु च दृष्टिपातः करणीयः इति ।
अवगतं महाराज !


यदा रवीन्द्रदेवः पुष्पराजं गुहा-समीपं प्रापयितुं गतः तदा ताभ्यां 'स्थीयताम्' इति ध्वनिः श्रूयते !


तौ पृष्ठतः परिवृत्य पश्यतः । आप्त पुरुषः वनवासिकन्यया सह स्थितः अस्ति ।
भवता अत्रैव स्थीयताम् । अहं तैः सह सम्भाषणं करिष्यामि ।
यथा भवदिच्छा श्रीमन् !


गुहामन्दिरे विचित्रघटना प्रवृत्ता । पूर्णिमा-कारणेन तत्र केचन भक्ताः आगताः आसन् ।


तेन अग्नौ गरुडद्वयं क्षिप्तम् ....




यदा अग्निकणाः उत्पन्नाः तदा गुरोः नागबन्धोः ध्वनिः श्रुतिपथम् आगतः ।
आदित्यस्य विवाहः न भवेत् । तत् मम योजनासाफल्ये बाधकं भविष्यति ।




एतया महिलया मम शक्तयः प्राप्ताः सन्ति । एतां चन्द्रपुरीं नयन्तु, मम उद्देश्यं साधयिष्यति एषा ।

मद्द्वारा किं कारयितुम् इच्छति भवान् ? कृपया वदतु ।

भवान् चन्द्रपुरीं प्रवेष्टु न शक्नोति; किन्तु अस्माकम् एषः सुहृत् तत् कर्तुं शक्नोति, अस्मिन् कस्यापि सन्देहः न भवति ।

मित्र ! भवतः पितुः कृते एतत् साहाय्यं करोमि ।


प्रथमं मम स्थानं दृढं भवतु । तदनन्तरं चन्द्रपुर्याः अधिग्रहणे भवद्राजस्य साहाय्यं करिष्यामि ।
चिन्ता मा भवतु मित्र ।


अन्येन अश्वेन माम् अनुसरतु इति तां वदतु । अस्माकं मेलनविषयं राजानं सूचयामि ।


गच्छाम ! गत्वा, एताः अनूह्याः घटनाः अधिकृत्य पितरं वदाम । तेन सन्तुष्टः भविष्यति सः ।


चन्द्रपुर्याम् .....
अहं वज्रपुर्याः प्रधानमन्त्री अस्मि । विवाहे राज्याभिषेकोत्सवे च भागं वोढुम् आगतः अस्माकं राजा अत्रैव अस्ति । एषा राज्ञ्याः दासी अस्ति ।


चन्द्रपुरीं प्रति स्वागतं भवताम् । अन्तः गम्यताम् । भवतोः अश्वं वयं रक्षिष्यामः ।


भवती मया अत्र आनीता अस्ति इति कोऽपि न जानीयात् । मम शुभ-कामना सर्वदा अस्ति एव ।


भवान् मां वज्रपुरीराजस्य विक्रमसिंहस्य समीपं किं नयेत् ? कृपया तस्य आवासस्थानं दर्शयतु ।
अवश्यम् आर्य !


इतः इतः कृपया ।
अनुवर्तते

# 'खासी' जनानां कृतज्ञताज्ञापनोत्सवः



मेघालयराज्यस्य वनवासिजनानां 'खासी' नाम जातिः अत्युन्नतं स्तरं प्राप्तवती अस्ति । तज्जातीयानां पञ्चदिनात्मकः 'शाद नोङ्ग्क्रेम्'-नामकः उत्सवः प्रधानः सांस्कृतिकोत्सवः । अस्मिन् प्रसङ्गे क्षेत्रतः गृहं प्रति आगच्छतः धान्यराशेः सम्मुखे प्रकृतिदेव्यै कृतज्ञतां समर्पयन्ति ते । 'शिल्लाङ्ग'प्रदेशसमीपे सप्टम्बरमासे अस्य उत्सवस्य आचरणं दृश्यते प्रायः । सर्वशक्तियुता 'का बले श्यनोहरदेवी' परिपूज्यत तदा । पूर्वं तु एतदवसरे अजबलिः भवति स्म । बलिरूपेण दीयमानं प्राणिनं तेषां नायकः आनयति स्म । किन्तु इदानीं सा पद्धतिः परित्यक्ता अस्ति ।

एतत्प्रदेशस्य राज्ञः 'का सियेम् साद्'नामिका ज्येष्ठभगिनी एव उत्सवेऽस्मिन् अग्रेसरत्वं प्राप्य विधिं निर्वहति । 'तङ्गमुरि'नामकं नलिकाकारकं सङ्गीतोपकरणम् उपयुज्यते तया । एतस्य वाद्यस्य वादनेन उत्सवस्य आरम्भः भवति । तेषु पञ्चसु अपि उत्सवदिनेषु 'नोङ्ग्क्रेम्' - नामकं नृत्यम् अनुवर्तते । 'खासी'जातीयाः सर्वे पुरुषाः, सर्वाः महिलाः च पारम्परिकेण परिधानेन विराजन्ते अत्र । पुरुषाः वर्णयुक्तां कौशेयवेष्टीं धृत्वा धृतप्रावारकाः सन्तः शिरसि उष्णीषं धरन्ति । ते एकेन हस्तेन खड्गं शूलं वा गृहीत्वा अपरेण हस्तेन 'याक्'जन्तोः केशगुच्छं गृह्णन्ति ।

महिलाः पुरातनशैलीयुतानि वस्त्राणि धृत्वा सुवर्णरजताभूषणैः सह किरीटम् अपि धरन्ति । वैभवसङ्केतभूतस्य छत्रस्य अधः 'सियेम् सादा' सनृत्यवाद्यघोषं नीयते । एतत् राजनृत्यम् इति प्रसिद्धम् । तां परितः कन्याः वृत्ताकारेण सम्मिल्य मन्दपदनिक्षेपपूर्वकं नृत्यन्ति । बाह्यवर्तुले युवकाः मण्डलाकारेण तिष्ठन्तः खड्गं शूलं वा चालयन्तः गाम्भीर्यगत्या अग्रे चलन्ति । एतेषां नृत्यावसरे आनकस्य तङ्गमुरिवाद्यस्य च वादनं भवति । पञ्चमे दिने 'सियेम्'देव्याः प्रार्थनया एषः उत्सवः समाप्तिम् एष्यति ।

**न्यूट्रिनूरसप्रश्नः-२**

**उत्तराणि**

१. 'मोहस् स्केल' इति

२. २०५ संख्याकाः ।




प्रथमं मम स्थानं दृढं भवतु । तदनन्तरं चन्द्रपुर्याः अधिग्रहणे भवद्राजस्य साहाय्यं करिष्यामि ।
चिन्ता मा भवतु मित्र ।


अन्येन अश्वेन माम् अनुसरतु इति तां वदतु । अस्माकं मेलनविषयं राजानं सूचयामि ।


गच्छाम ! गत्वा, एताः अनूह्याः घटनाः अधिकृत्य पितरं वदाम । तेन सन्तुष्टः भविष्यति सः ।


चन्द्रपुर्याम् .....
अहं वज्रपुर्याः प्रधानमन्त्री अस्मि । विवाहे राज्याभिषेकोत्सवे च भागं वोढुम् आगतः अस्माकं राजा अत्रैव अस्ति । एषा राज्ञ्याः दासी अस्ति ।


चन्द्रपुरीं प्रति स्वागतं भवताम् । अन्तः गम्यताम् । भवतोः अश्वं वयं रक्षिष्यामः ।


भवती मया अत्र आनीता अस्ति इति कोऽपि न जानीयात् । मम शुभ-कामना सर्वदा अस्ति एव ।


भवान् मां वज्रपुरीराजस्य विक्रमसिंहस्य समीपं किं नयेत् ? कृपया तस्य आवासस्थानं दर्शयतु ।
अवश्यम् आर्य !


इतः इतः कृपया ।
अनुवर्तते

## भारतस्य सांस्कृतिकः विशेषः

# 'खासी' जनानां कृतज्ञताज्ञापनोत्सवः



मेघालयराज्यस्य वनवासिजनानां 'खासी' नाम जातिः अत्युन्नतं स्तरं प्राप्तवती अस्ति । तज्जातीयानां पञ्चदिनात्मकः 'शाद नोङ्क्रेम्'-नामकः उत्सवः प्रधानः सांस्कृतिकोत्सवः । अस्मिन् प्रसङ्गे क्षेत्रतः गृहं प्रति आगच्छतः धान्यराशेः सम्मुखे प्रकृतिदेव्यै कृतज्ञतां समर्पयन्ति ते । 'शिल्लाङ्ग'प्रदेशसमीपे सप्टम्बरमासे अस्य उत्सवस्य आचरणं दृश्यते प्रायः । सर्वशक्तियुता 'का बले श्यनोहरदेवी' परिपूज्यत तदा । पूर्वं तु एतदवसरे अजबलिः भवति स्म । बलिरूपेण दीयमानं प्राणिनं तेषां नायकः आनयति स्म । किन्तु इदानीं सा पद्धतिः परित्यक्ता अस्ति ।

एतत्प्रदेशस्य राज्ञः 'का सियेम् साद्'नामिका ज्येष्ठभगिनी एव उत्सवेऽस्मिन् अग्रेसरत्वं प्राप्य विधिं निर्वहति । 'तङ्गमुरि'नामकं नलिकाकारकं सङ्गीतोपकरणम् उपयुज्यते तया । एतस्य वाद्यस्य वादनेन उत्सवस्य आरम्भः भवति । तेषु पञ्चसु अपि उत्सवदिनेषु 'नोङ्क्रेम्' - नामकं नृत्यम् अनुवर्तते । 'खासी'जातीयाः सर्वे पुरुषाः, सर्वाः महिलाः च पारम्परिकेण परिधानेन विराजन्ते अत्र । पुरुषाः वर्णयुक्तां कौशेयवेष्टीं धृत्वा धृतप्रावारकाः सन्तः शिरसि उष्णीषं धरन्ति । ते एकेन हस्तेन खड्गं शूलं वा गृहीत्वा अपरेण हस्तेन 'याक्'जन्तोः केशगुच्छं गृह्णन्ति ।

महिलाः पुरातनशैलीयुतानि वस्त्राणि धृत्वा सुवर्णरजताभूषणैः सह किरीटम् अपि धरन्ति । वैभवसङ्केतभूतस्य छत्रस्य अधः 'सियेम् सादा' सनृत्यवाद्यघोषं नीयते । एतत् राजनृत्यम् इति प्रसिद्धम् । तां परितः कन्याः वृत्ताकारेण सम्मिल्य मन्दपदनिक्षेपपूर्वकं नृत्यन्ति । बाह्यवर्तुले युवकाः मण्डलाकारेण तिष्ठन्तः खड्गं शूलं वा चालयन्तः गाम्भीर्यगत्या अग्रे चलन्ति । एतेषां नृत्यावसरे आनकस्य तङ्गमुरिवाद्यस्य च वादनं भवति । पञ्चमे दिने 'सियेम्'देव्याः प्रार्थनया एषः उत्सवः समाप्तिम् एष्यति ।

**न्यूट्रिनूरसप्रश्नः-२**

**उत्तराणि**




१. 'मोहस् स्केल' इति

२. २०५ संख्याकाः ।

# पुटोऽयं भवताम् पुटोऽयं भवताम्

## भवदर्थकं विज्ञानम्



### समीकरणं किमर्थम् ?

परिशुद्धं निष्पुटितं च समवस्त्रं वस्तुतः शोभां कल्पयति एव । असमीकृतवस्त्रधारिणां यावत् सौन्दर्यं ततोऽपि अधिकं सौन्दर्यं सिद्ध्येत् इतः । एतेन एव कारणेन परमालसोऽपि स्ववस्त्राणां समीकरणस्य परिश्रमं कर्तुं सिद्धः । पुटीभवनेन उत्पद्यमानानां रेखाणाम् अवरोधनाय केचन वस्त्रनिर्मातारः विशिष्टं निर्माणक्रमम् अनुसरन्ति । सामान्यायाः वस्त्रनिर्माणप्रक्रियातः तु क्षालनावसरे वस्त्राणि असुन्दराणि भवन्ति एव ।

पुटीकृतेषु वस्त्रेषु उत्पन्नानां वक्ररेखाणां निवारणाय उष्णसहितं भारयुक्तं समीकरणसाधनम् आवश्यकं भवति । यदा उपविश्यते तदा, अतिपिनद्धानि वस्त्राणि यदा ध्रियन्ते तदा च वस्त्राणि असुन्दरताम् आप्नुवन्ति ।

वस्त्रवयनावसरे जातस्य सूत्राणां वक्रीभवनस्य कारणेन, एकस्य सूत्रस्य उपरि अपरं सूत्रं तिष्ठति, सूत्रं स्थानच्युतिं वा प्राप्नोति इति कारणेन च वस्त्रेषु पुटीभवनसम्बद्धाः रेखाः दृश्यन्ते ।

वस्त्राणि यदा समीक्रियन्ते तदा तस्मात् समीकरात् निर्गच्छतः औष्ण्यस्य स्पर्शेन सूत्रम् ऋजुत्वं प्राप्नोति, बलपूर्वकमर्दनेन पूर्वस्थितिं प्राप्तं सत् वस्त्रं सुयोग्यं दृश्यते ।

## भवतां परिसरः

### जङ्गमदूरवाणीविषये शिष्टाचाराः



आनुकूल्यकल्पकेषु आधुनिकवस्तुषु जङ्गमदूरवाण्याः विशिष्टं स्थानम् । भारते वर्धमानस्य नावीन्यमोहस्य कारणतः एतस्यां स्थितः जनादरः परां कोटिं गतः अस्ति । अद्यापि केचन चिन्तयन्ति यत् एतस्य साधनस्य आविष्कारात् पूर्वं जनाः कथं कार्याणि कुर्वन्ति स्म इति ।

एतस्याः उपयोगावसरे केचन शिष्टाचाराः तु अवश्यम् अनुसरणीयाः एव सर्वैः अपि उपयोक्तृभिः । ते च केचन यथा – सदा सन्देशागमन-सूचकः ध्वनिः न्यूनः एव भवतु । यदा कस्याञ्चित् गोष्ठ्याम् उपस्थीयते तदा कापि सूचना प्रेषणीया चेत् गोष्ठीसम्बद्धस्य जनस्य अनुज्ञा प्राप्यताम् ।

सम्भाषणं यावच्छक्यं सङ्क्षिप्तं भवतु । उच्चध्वनियुक्तः वार्तालापः मास्तु । मृदुतया उच्यताम् ।

वाहनचालनावसरे अस्याः उपयोगः सर्वथा मास्तु । यतः तस्मात् अपायः स्वागतीकृतः भवेत् । ये छात्राः भवन्ति ते विद्यालयं प्रति एतां न नयेयुः ।

# पुटोऽयं भवताम् पुटोऽयं भवताम्




## भवन्तः जानन्ति किम् ?

### मकरसन्देशः

दूरवाण्याः आकरणध्वनेः श्रवणेन एव ज्ञायते यत् कोऽपि सन्देशः प्रतीक्षते इति । किन्तु कस्माच्चित् क्रूरमकरात् एतादृशः सन्देशः प्रेष्येत इत्यत्र किं भवन्तः विश्वासं कुर्युः ? सर्वथा न खलु । किन्तु भवन्तः हन्नेसबोथसदृशाः वैज्ञानिकाः यदि स्युः तर्हि अवश्यं विश्वासं कुर्युः एव तत्र । प्राणिनाम् अध्ययनं कुर्वाणः डा॰ बोथवर्यः विरामकाले भयानकेभ्यः मकरेभ्यः सन्देशप्राप्तेः अभ्यासं कृतवान् । एवं प्राप्तः सन्देशः मकरस्य कुटसंख्यां, परिस्थितिं, भौगोलिकस्थानं, दिनाङ्कं च सूचयति । मकरस्य मस्तिष्कस्य पृष्ठभागे बद्धात् १२ अङ्गुलपरिमितात् दूरवाणीसाधनात् एतादृशः सन्देशः आगच्छति ।

## अभिवर्ध्यतां ज्ञानशक्तिः



***भारतीयगणितविज्ञानक्षेत्रयोः कानिचन वैशिष्ट्यानि वयम् अत्र स्मराम ।***

१. आर्यभटः कस्मिन् विषये प्रसिद्धः ?

२. केन राज्ञा राजस्थानस्थे जयपुरे प्रख्यातं नभोवीक्षणकेन्द्रं निर्मितम् ? तत् च केन नाम्ना निर्दिश्यते ?

३. केन भारतीयविज्ञानिना ऐदम्प्राथम्येन नोबल्-पुरस्कारः प्राप्तः ?

४. विज्ञानाय डा॰ मेघनादशा-वर्यस्य प्रसिद्धं योगदानं किम् ?

५. युवावस्थायां मृतः अतिबुद्धिमान् विज्ञानी कः ?

*(उत्तराणि ६६ तमे पृष्ठे)*



# चित्रशीर्षिकास्पर्धा

## अधस्तनं चित्रद्वयं दृष्ट्वा परस्परसम्बन्धिना वाक्यद्वयेन चित्र-शीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?



KALANIKETAN BALU



MAHANTESH C. MORABAD

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

योग्या शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू. १००/- पुरस्काररूपेण दास्यन्ते । पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

'सप्टम्बर्'मासस्य शीर्षिकाप्रेषकः -

**प. सुदर्शनः**

३/४ सेतुभवस्वामिस्ट्रीट् (सोलैयप्पन्वीथिकासमीपे)

**कुम्भकोणम् - ६१२००१ (त.ना.)**

### पुरस्कृता शीर्षिका





व्यवहारः व्यञ्जयति प्रीतिम् ।
दर्शनं जनयति भीतिम् ॥



## अभिवर्ध्यतां ज्ञानशक्तिः - उत्तराणि

१. सः बीजगणितस्य उपस्थापकः । शून्यस्य महत्त्वम् अपि ज्ञापितं तेन ।

२. महाराजः जयसिंहः द्वितीयः । राशीवलयवेधशाला इति नाम्ना ।

३. भौतशास्त्रज्ञः डा० सि.वि.रामनः १९३०तमे वर्षे ।

४. शरीरे जायमानः विकिरणांशपरिणामः तेन संशोधितः ।

५. श्रीनिवासरामानुजेन ।

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 26 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : B. Viswanatha Reddi (Viswam)



# कारयानीयायाः सहयात्रायाः उपयोगिता



प्रतिदिनं वर्धमानेन इन्धनमूल्येन शेखरः अतीव व्याकुलः आसीत् । मासिकः इन्धनव्ययः पर्वतीभूतः इव भासते स्म । कदाचित् सायं दशवर्षीयः तस्य पुत्रः तम् उक्तवान् – ''भवान् कतिचन समस्याः वदतु । अहं तासां परिहारम् अन्विष्यामि'' इति ।

''पितुः एकाग्रताभङ्गं मा कुरु'' इति अवदत् तस्य माता विद्या ।

''श्रृणोतु । रामः, देवराजः, रघुः चेति त्रयः स्वीयेन कार्यानेन विकासनगरतः महात्मगान्धिमार्गेण कार्यालयं गत्वा आगच्छन्ति । सोमवासरतः शुक्रवासरपर्यन्तम् एषः दैनन्दिनः व्यवहारः तेषाम् । प्रस्थानस्थलात् गम्यस्थानस्य दूरम् अस्ति ३० क्रोश-मितम् । एकलीटरमितेन इन्धनेन १५ क्रोशान् क्रमितुं शक्नोति कारयानम् । एकलीटरमितस्य इन्धनस्य मूल्यं ५० रूप्यकाणि । एवं तर्हि सप्ताहे त्रयाणाम् अपि इन्धनव्ययः कियान् भवेत् ?''

''तेषां साप्ताहिकव्ययः १,८०० रूप्यकमितः'' इति उक्त्वा पुत्रः क्षणं विचिन्त्य अपृच्छत् – ''किन्तु गम्यस्थानं समानं चेत् ते त्रयः मिलित्वा एकेन एव यानेन किमर्थं न गच्छेयुः ?'' इति ।

''उत्तमः एषः उपायः । किन्तु एकेन महात्मगान्धिमार्गः, अपरेण जवहरमार्गः, अन्येन शास्त्रिनगरं प्रति च गन्तव्यम् । तदा किं करणीयम् ?'' इति पृष्टवान् पिता ।

''तथापि न कापि समस्या । त्रयाणाम् अपि समानदिशि खलु प्रस्थानम् ? मिलित्वा गमनेन महान् एव धनराशिः सञ्चेतुं शक्यः'' इति अवदत् पुत्रः ।

''आर्यपुत्र ! किमर्थं भवता अपि अयं प्रयोगः न करणीयः ? भवान्, मोहनः, रविः च योजनां कृत्वा सहयात्राम् एकेन कारयानेन कुर्वन्तु नाम'' इति उक्तवती विद्या ।

उत्साहितः शेखरः अनन्तरदिनात् आरभ्य तां योजनाम् अनुष्ठानपथम् आनीतवान् । तेन धनसञ्चयं कर्तुं शक्तः अभवत् सः । एतादृशी सहयात्रायोजना क्रियते चेत् न केवलं धनव्ययः न्यूनीकर्तुं शक्यः, अपि तु वाहनसम्मर्दनिवारणपूर्वकं वातावरणं प्रदुषणात् रक्षितुम् अपि शक्यम् । तेन राष्ट्रस्तरे इन्धनोपभोगप्रमाणं न्यूनं भवेत्, परोक्षतया देशः लाभान्वितः भवेत् च ।

